तन्नियोगेनवाब्रूयादर्थंसपरिनिश्चितं
सुखप्रबंधगोष्ठीषुविवादेवादिनांमतं ॥ १५ ॥
आज्ञेनेंबोलिजेत्याच्याअर्थातेंयुक्तिसंयुत ॥ सुखप्रबंधगोष्टींतविवादेंवादिचेंमत ॥ १५ ॥

विजानन्नपिनोब्रूयाद्भर्तुःक्षिप्रोत्तरंवचः
सदानुद्धतवेषःस्यान्नृपाहूतस्तुप्रांजलिः ॥ १६ ॥
जाणतांहीनवाद्यावेंस्वामीतेंक्षिप्रउत्तर ॥ सदावेषेंनम्रजोडीहातभूपेंबलाविता ॥ १६ ॥

तद्वांकृतनतिःश्रुत्वावस्त्रांतरितसंमुखः
तदाज्ञांधारयित्वादौस्वकर्माणिनिवेदयेत् ॥ १७ ॥
नमोनितद्वाकूऐकावीवस्त्रेंझांकुनियांमुखा ॥ आधींमानींतदाज्ञेतेंनिवेदीनिजकार्यतें ॥ १७ ॥

नत्वासीतासनेप्रह्वस्तत्पार्श्वेसंमुखोज्ञया
उच्चैःप्रसहनंकासंष्ठीवनंकुत्सनंतथा ॥ १८ ॥
नमोनिसावधबसेनृपाज्ञेंवाजुसन्मुख ॥ मोठ्यानेंहंसणेंखासशिंकश्रद्धादिनाकरी ॥ १८ ॥

जृंभणंगात्रभंगंचपर्वास्फोटंचवर्जयेत्
राज्ञादिष्टंतुयस्थानंतत्रातिष्ठेन्मुदान्वितः ॥ १९ ॥
जांभळीआळसतसाबोटाचेंमोडणेंत्यजी ॥ नृपानेंदाखवीलेंजेंस्थानतेथेंसुखेंबसे ॥ १९ ॥

प्रवीणोचितमेधावीवर्जयेदभिमानतां
आपद्युन्मार्गगमनेकार्यकालात्ययेषुच ॥ २० ॥
हुशारबुद्धिवानानेंटाकावाअभिमानतो ॥ आपद्धर्मेविपत्काळींकामाउशिरहीजरी ॥ २० ॥

अपृष्टोपिहितान्वेषीब्रूयात्कल्याणभाषितं
प्रियंतथ्यंचपथ्यंचवदेद्धर्मार्थकंवचः ॥ २१ ॥
नपुसतांहीहितासोधीबोलेकल्याणभाषणा ॥ गोडसत्यतसेंपथ्यबोलेधर्मार्थभाषण ॥ २१ ॥

समानवार्तयाचापितद्धितंबोधयेत्सदा
कीर्तिमन्यन्नृपाणांवावदेन्नीतिफलंतथा ॥ २२ ॥
सदासहजगोष्टीनेंनृपातेंहितबोधिजे ॥ कीर्तितेंअन्यभूपाच्चेवदेनीतिफळातसें ॥ २२ ॥

दातात्वंधार्मिकःशूरोनीतिमानसिभूपते
अनीतिस्तेतुमनसिवर्ततेनकदाचन ॥ २३ ॥

तूंदाताशूरधर्मात्माआहेसनीतिमंततूं ॥अनीतिहीतुझ्याचित्तींभूपानाहींकधींचही ॥२३॥

येयेभ्रष्टाअनीत्यातान्तदग्रेकीर्तयेत्सदा
नृपेभ्योह्यधिकोसीतिसर्वेभ्योनविशेषयेत् ॥२४॥

जेजेनष्टअनीतीनेंत्यापुढेंकाथिजेतयां ॥ सर्वांहूनीतूंअधिकनाविशेषीअसेंकधीं ॥ २४ ॥

परार्थंदेशकालज्ञोदेशेकालेचसाधयेत्
परार्थनाशनंनस्यात्तथाब्रूयात्सदैवहि ॥ २५ ॥

परार्थदेशकालज्ञेदेशींकालींचसाधिजे ॥ पराचानाशनजसातसेंबोलेसदैवाहे ॥ २५ ॥

नकर्षयेत्प्रजांकार्यमिषतश्चनृपंसदा
अपिस्थाणुवदासीतशुष्यन्परिगतःक्षुधा ॥ २६ ॥

नखेचावेंकार्यमिषेंप्रजेतेंनरपेंकदा ॥ जसाजागींवृक्षसुखेंक्षुधेनेंपारिपीडित ॥ २६ ॥

नत्वेवानर्थसंपन्नांवृत्तिमीहेतपंडितः
यत्कार्येयोनियुक्तस्याद्भूयात्तत्कार्यतत्परः ॥ २७ ॥

अनर्थज्यावृत्तिमाजीइच्छावीतीनपंडितें ॥ जयाकार्यीजोनियुक्तव्हावेंतत्कार्यतत्पर॥ २७॥

नान्याधिकारमन्विच्छेन्नाभ्यसूयाच्चकेनचित्
नन्यूनंलक्षयेत्कस्यपूरयीतस्वशक्तितः ॥ २८ ॥

अन्यकामानइच्छावेंकोणाशीहीनइर्षीजे॥न्यूनपाहीनकोणाचेंज्ञाकावेंनिजशक्तिनें ॥२८॥

परोपकरणादन्यन्नस्यान्मित्रकरंसदा
करिष्यामीतितेकार्येनकुर्यात्कार्यलंबनं ॥ २९ ॥

परोपकाराहुनियांनदुजेंमैत्रिसाधन ॥ करीनऐसेंवदुनीविलंबानकरीकधीं ॥ २९ ॥

द्राक्कुर्यात्तुसमर्थश्चेत्साशंदीर्घंनरक्षयेत्
गुह्यंकर्मचमंत्रंचनभर्तुःसंप्रकाशयेत् ॥ ३० ॥

त्वरेंकरीशक्तजरदीर्घआशानलावेजे ॥ गुप्तकर्मामसलतीलानृपानकथिजेकधीं ॥ ३० ॥

विद्वेषंचविनाशंचमनसापिनचिंतयेत्
राजापरममित्रोस्तिनकामंविचरेदिति ॥ ३१ ॥

कोणाचेंद्वेशनाशातेंमनानेंहीनाचांतिजे ॥ राजामित्रअसेमाझायास्वछंदेनवागणें ॥ ३१ ॥

स्त्रीभिस्तदर्थिभिःपापैर्वैरिभूतैर्निराकृतैः
एकार्थचर्यांसाहित्यंसंसर्गंचाविवर्जयेत् ॥ ३२ ॥

स्त्रियायाचकपाप्यांशीवैरींवाकाढिल्याजनीं ॥ सहवासएककामासंबंधातेंहिटाकिजे ॥ ३२ ॥

वेषभाषानुकरणंनकुर्यात्पृथ्वीपतेः
संपन्नोपिचमेधावीनस्पर्धेतचतद्गुणैः ॥ ३३ ॥

नृपाचीवेषवाभाषातशीनवादिजेकधीं ॥ संपन्नेंहीबुद्धिवंतेंस्पर्धाजावेंनतद्गुणी ॥ ३३ ॥

रागापरागौजानीयाद्भर्तुःकुशलकर्मवित्
इंगिताकारचेष्टाभ्यस्तदभिप्रायतातथा ॥ ३४ ॥

रागवारोषभूपाचेजाणेंकुशलकर्मही ॥ चेष्टाइंगितआकारेंनृपाभिप्रायजाणिजे ॥ ३४ ॥

तद्दत्तवस्त्रभुषादिचिन्हंसंधारयेत्सदा
न्यूनाधिक्यंस्वाधिकारकार्येनित्यंनिवेदयेत् ३५ ॥

तेणेंदिल्यावस्त्रभूषाचिन्हातेंधारिजेसदा ॥ न्यूनाधिकास्वाधिकारीकार्यींबाकथिजेनृपा ॥ ३५ ॥

तदर्थांतत्कृतांवार्तांश्रुणुयाद्वापिकीर्तयेत्
चारसूचकदोषेणत्वन्यथायद्वदेन्नृपः ॥ ३६ ॥

तदर्थवातत्कृतजोऐकेंवाकथिजेतशी ॥ चाहाडदोषेंनृपतीअन्यथावदलाजरी ॥ ३६ ॥

श्रुणुयान्मौनमाश्रित्यतथ्यवन्नानुमोदयेत्
आपद्गतंसुभर्तारंकदापिनपरित्यजेत् ॥ ३७ ॥

ऐकिजावेंमौनभावेंअनुमोदीनसत्यसें ॥ विपत्तीस्वाभिलायेतांसोडिजावेंनसेवकीं ॥ ३७ ॥

एकवारमप्यशितंयस्यान्नंह्यादरेणच
तदिष्टंचिंतयेन्नित्यंपालकस्यांजसानकिं ॥ ३८ ॥

जयाचेंभाक्षिलेंअन्नआदरेंएकदांजरी ॥ तयाचेंइष्टचिंतावेंस्वामिचेंनकसेंमग ॥ ३८ ॥

अप्रधानःप्रधानस्यात्कालेचात्यंतसेवनात्
प्रधानोप्यप्रधानस्यात्सेवालस्यादिनायतः॥३९॥

अमुख्यहीमुख्यहोतोसमयासाधिलेंजरी ॥ महानहीअल्पहोतोसेवनींआळसादिकें ॥३९॥

नित्यंसंसेवनरतोभृत्योराज्ञप्रियोभवेत्
स्वस्वाधिकारकार्यंयद्राक्कुर्यात्सुमनोयतः ॥ ४० ॥

सेवनींनित्यरतजोराजालाप्रियहोयतो ॥ निजाधिकारकार्यातेंत्वरेंस्वच्छमनेंकरी ॥४०॥

नकुर्यात्सहसाकार्यंनीचंराजापिनोदिशेत्
तत्कार्यकारकाभावेराज्ञःकार्यंसदैवहि ॥ ४१ ॥

सहसानकरीकामानीचाभूपवदेनतो ॥ त्याकामींचाजरीनाहींराजकामकरीतरी ॥ ४१ ॥

कालेयदुचितंकर्तुंनीचमप्युत्तमोर्हति
यस्मिन्प्रीतोभवद्राजातदानिष्टंनाचिंतयेत् ॥ ४२ ॥

काळींजेयोग्यकरण्यानीचाहीयोग्यउत्तम ॥ जयावरींतुष्टराजातदानिष्टानचिंतिजे ॥४२॥

नदर्शयेत्स्वाधिकारगौरवंतुकदाचन
परस्परंनाभ्यसूयुर्नभेदंप्राप्नुयुःकदा ॥ ४३ ॥

नदाखवावेंकधिंहीस्वाधीकारीयगौरवा ॥ परस्परनइर्षावेंनव्हावोंफितुरीकधीं ॥ ४३ ॥

राज्ञाचाधिकृताःसंतोस्वस्वाधिकारगुप्तये
अधिकारिगणोराजासद्वृत्तौयत्रतिष्ठतः ॥ ४४ ॥

राजदत्ताधिरातेंराखिजेआपआपला ॥ अधिकारीतसाराजासुवृत्तीवागतीजिथें ॥४४ ॥

उभौतत्रस्थिरालक्ष्मीर्विपुलासंमुखीभवेत्
अन्याधिकारवृत्तंतुनब्रूयाछ्रुतमप्युतः ॥ ४५ ॥

दोन्हीतिथेंस्थीरलक्ष्मीराहेसन्मुखपुष्कळ॥वार्तेतेंकामवाल्याच्यानवदेऐकिलीजरी ॥४५॥

राजानश्रुणुयादन्यमुखतस्तुकदाचन
नबोधयंतिचाहितमहितंचाधिकारिणः ॥ ४६ ॥

नृपानेंनाऐकिजावेंवचअन्यमुखेंकधीं ॥ हिताना अहितासंज्ञ अधिकारी नबोधिती ॥४६ ॥

प्रछन्नवैरिणस्तेतुदास्यरूपमुपाश्रितः
हिताहितंनश्रुणोतिराजामंत्रिमुखान्नयः ॥ ४७ ॥
जाणेतयागुप्तवैरीदासरूपेंकरूनियां ॥ हिताहितानऐकेजोप्रधानवदनेंनृप ॥ ४७ ॥
सदस्यूराजरूपेणप्रजानांधनहारकः
सुप्टष्टव्यवहारायेराजपुत्रैश्चमंत्रिणः ॥ ४८ ॥
तोचोरराजरूपानेंप्रजाप्राणधनाहरी ॥ व्यवहारापुसूंयोग्यराजपुत्रींप्रधानजे ॥ ४८ ॥
विरुध्यंतिचतैःसाकंतेतुप्रछन्नतस्कराः
बालाअपिराजपुत्रानावमान्यास्तुमंत्रिभिः ।४९ ।
विरोधकरतेंत्यांशींजाणावेगुप्तचोरते ॥ बालहिराजतनयप्रधानींनावमानिजे ॥ ४९ ॥
सदासुबहुवचनैःसंबोध्यास्तेप्रयत्नतः
असदाचरितंतेषांकाचिद्राज्ञेनदर्शयेत् ॥ ५० ॥
बहुमानेंप्रयत्नानेंबोधिजावेतयांसदां ॥ थोड्यात्यांच्यादुराचारानदावीनरपासदा ॥ ५० ॥
स्त्रीपुत्रमोहोबलवान्तयोर्निंदानश्रेयसे
राज्ञोवश्यतरंकार्यंप्राणसंशायितंचयत् ॥ ५१ ॥
स्त्रीपुत्राचामोहमोठातान्निंदानसुखप्रद ॥ अवश्यजेराजकामप्राणसंशयजामधें ॥ ५१ ॥
आज्ञापयाग्रतश्चाहंकरिष्येततुनिश्चितं
इतिविज्ञाप्यद्राक्कर्तुंप्रयेततस्वशक्तितः ॥ ५२ ॥
आज्ञादेमीपुढेंहोतोंनिश्चयेंकरितोंपाहा ॥ विज्ञापुनित्वरेंऐसेंप्रयतावेंस्वशक्तिने ॥ ५२ ॥
प्राणानपिचसंदद्यान्महत्कार्येनृपायच
भृत्यःकुटुंबपुष्ट्यर्थंनान्यथातुकदाचन ॥ ५३ ॥
प्राणातेंहीसमर्पावेमहाकार्यींनराधिपा ॥ दासेंकुटुंबभरणाअन्यथानकधींचहीं ॥ ५३ ॥
भृत्याधनहराःसर्वेयुक्त्याप्राणहरोनृपः
युद्धादौसुमहत्कार्येभृत्याप्राणान्हरेन्नृपः ॥ ५४ ॥
वेतनेंधनरत्त्वतसर्वप्राणांतेंनपयुक्तिनें ॥ लढाईंतमहत्कार्यींदासप्राणाहरीनृप ॥ ५४ ॥

नान्यथाभृतिरूपेणभृत्योराजधनंहरेत्
अन्यथाहरतस्तौतुभवतश्चस्वनाशकौ ॥ ५५॥

विनावेतनदासानेंराजद्रव्यनइछिजे ॥ अन्यथाहरितांदोघेस्वनाशाहेतुहोतिते ॥ ५५ ॥

राजानुयुवराजस्तुमान्योमात्यादिकैःसदा
तन्यूनामात्यनवकंतन्यूनाधिकृतोगणः ॥ ५६ ॥

राजानयुवराजातेंप्रधानेंमानिजेसदा ॥ तन्यूननौप्रकातितेंतन्यूनाअधिकारिते ॥ ५६ ॥

मंत्रीतुल्यश्चायुतिकोन्यूनसाहास्त्रिकोमतः
नक्रीडयेद्राजसमंक्रीडितेतंविशेषयेत् ॥ ५७ ॥

मंत्रीतसाआयुतिकसहस्त्रपातितत्कमी ॥ नृपासवेंनखेळावेंखेळतांत्र्याविशेषिजे ॥ ५७ ॥

नावमान्याराजपत्नीकन्याद्यपिचमंत्रिभिः
राजसंबंधिनःपूज्याःसुहृदश्चयथार्हतः ॥ ५८ ॥

नावमानीराजपत्नीकन्येतेंहीप्रधानतो ॥ पुजावेंराजसंबंध्यांयथायोग्यसुहृज्जना ॥ ५८ ॥

नृपाहूतस्तुरंगछेत्यक्त्वाकार्यशतंमहत्
मित्रायापिनवक्तव्यंराजकार्यंसुमंत्रितं ॥ ५९ ॥

नृपाहूतत्वरेंजाईकामेशंभरसोडुनी ॥ मित्रालाहीनसांगावेंराजकार्यसुगुप्तजें ॥ ५९ ॥

भृतिविनाराजद्रव्यमदत्तंनाभिलाषयेत्
राजाज्ञयाविनानेछेत्कार्यमाध्यास्छिाकिंभृतिं ॥६०॥

अवेतनदिल्याबीणराजद्रव्यानइछिजे ॥ राजआज्ञेविनानेछीलांचघेण्याकधींचही॥६०॥

ननिहन्याद्द्रव्यलोभात्सत्कार्यंयस्यकस्यचित्
स्वस्त्रीपुत्रधनप्राणैःकालेसंरक्षयेन्नृपं ॥ ६१ ॥

ननासावेंद्रव्यलोभेंकोणाचेंकामजेंखरें ॥ स्वस्त्रीपुत्रधनप्राणेंसमयींरक्षिजेनृपा ॥ ६१ ॥

उत्कोचंनैवगृण्हीयान्नान्यथाबोधयेन्नृपं
अन्यथादंडकंभूपंनित्यंप्रबलदंडकं ॥ ६२ ॥

ईचापतीलानकरीनभल्तेंसुचवीनृपा ॥ अन्यथादंडकाभूपानित्यप्रबलदंडका ॥ ६२ ॥

निगृह्यबोधयेत्सम्यगेकांतेराज्यगुप्तये
हितंराज्ञश्चाहितंयल्लोकानांतत्रकारयेत् ॥ ६३॥

करोनिकैदसांगावेंयेकांतींराज्यरक्षणा ॥ हितभूपाअहितजेइतरातेंकरीतया ॥ ६३ ॥

नवीनकरशुल्कादिलोकउद्विजतेततः
गुणनीतिबलद्वेषिकुलभूतोप्यधार्मिकः ॥ ६४ ॥

जखादवाकरनवातेणेंउद्विग्नलोकहो ॥ गुणानीतिबलाद्वेषीकुलीनाहिअधार्मिक ॥ ६४ ॥

नृपोयदिभवेत्तंतुत्यजेद्राष्ट्रविनाशकं
तत्पदेतस्यकुलजंगुणयुक्तंपुरोहितः ॥ ६५॥

नृपहोयजरीत्यातेंटाकिजेराज्यनाशका॥त्यास्थानींतत्कुलोत्पन्नागुणयुक्तापुरोहितें ॥६५॥

प्रकृत्यनुमतिंकृत्वास्थापयेद्राज्यगुप्तये
सास्त्रोदूरंनृपात्तिष्ठेदस्त्रपाताद्बहिःसदा ॥ ६६ ॥

प्रधानमतघेऊनिस्थापिजेराज्यरक्षणा ॥ शस्त्रीदूरनृपाहूनिअस्त्रपाताहुनीतसा ॥ ६६ ॥

सशस्त्रोदशहस्तंतुयथादिष्टंनृपप्रियाः
पंचहस्तंवसेयुर्वैमंत्रिणोलेखकाःसदा ॥ ६७ ॥

शस्त्रीराहेदाहाहातींस्वइछेनेंनृपप्रिय ॥ पांचहाततसेदूरीकामवालेहिकार्कुन ॥ ६७ ॥

सेनपैस्तुविनानैवसशस्त्रास्त्रोविशेत्सभां
पुरोहितःश्रेष्ठतरःश्रेष्ठःसेनापतिःस्मृतः ॥ ६८ ॥

राजकार्याविनाकोणीसशस्त्रनसभागत ॥ श्रेष्ठश्रेष्ठउपाध्यायश्रेष्ठसेनापतीतसा ॥ ६८ ॥

समःसुहृच्चसंबंधीह्युत्तमामंत्रिणःस्मृताः
अधिकारिगणोमध्योधमौदर्शकलेखकौ ॥ ६९ ॥

समसंबंधिसुहृदप्रधानाजाणउत्तमा ॥ तेमध्यमदरद्वारनीचकार्कुनपाहते ॥ ६९ ॥

ज्ञेयोधमतमोभृत्यःपरिचारगणःसदा
परिचारगणान्न्यूनोविज्ञेयोनीचसाधकः ॥ ७० ॥

अधमाजाणिजेदासापरिचारकहीतसे ॥ साहूनिहीनीचकामाकरतेनीचजाणिजे ॥७० ॥

पुरोगमनमुत्थानंस्वासनेसन्निवेशनं
कुर्यात्सुकुशलप्रश्नंक्रमात्सुस्मितदर्शनं ॥७१॥
पुढेंजाणेंहिउठणेंघणेंवानिजआसनीं ॥ करावेंकुशलप्रश्नाक्रमेंसास्मितपाहणें ॥ ७१ ॥
राजापुरोहितादीनांत्वन्येषांस्नेहदर्शनं
अधिकारिगणादीनांसभास्थश्चनिरालसः ॥७२॥
उपाध्यायादिकांराजाअन्यासस्नेहपाहणें॥अधिकारिगणादतिंजोसभास्थानीरालस॥७२॥
विद्यावत्सुशरच्चंद्रोनिदाघार्कोद्विषत्सुच
प्रजासुचवसंतार्कइव स्यात्रिविधोनृपः ॥ ७३ ॥
विद्यावंताशरच्चंद्ररिपुतेंग्रीष्मसूर्यजो ॥ प्रजेलागींवसंतार्कअसात्रिविधहोनृप ॥ ७३ ॥
यदिब्राह्मणभिन्नेषुमृदुत्वंधारयेन्नृपः
परिभवंतितंनीचायथाहस्तिपकागजं ॥ ७४ ॥
जारिब्राह्मणभिन्नींतेंमृदुत्वधरिलेंनृपें ॥ अपमानितितेंनीचगडेकारिजसेंगजा ॥ ७४ ॥
भृत्याद्यैर्यन्नकर्तव्याःपरिहासाश्चक्रीडनं
अपमानास्पदेतेतुराज्ञोनित्यंभयावहं ॥ ७५ ॥
सेवकांसींनाकरावेंपरिहासाहिखेळण्या ॥ अपमानासतेहेतूराजालाभयदायक ॥ ७५ ॥
पृथक्पृथक्ख्यापयंतिस्वार्थसिध्यैर्नृपायते
स्वकार्येगुणवक्तृत्वासर्वेस्वार्थपरायतः ॥ ७६ ॥
निर्निराळेहिवदतीस्वार्थासाठींनृपासते ॥ स्वकार्यीगुणआणूनीसर्वस्वार्थीह्मणूनीयां॥७६॥
विकल्पंतेवमन्यंतिलंघयंतिचतद्वचः
राजभोज्यानिभुंजंतिनातिष्ठतिस्वकेपदे ॥७७॥
अवमान।विकल्पातेंतद्वचोंतेंहिलंघिती ॥ भोगितीराजभोगातेंराहतीननिजींपदीं ॥७७॥
विस्त्रंसयंतितन्मंत्रंविवृण्वंतिचदुष्कृतं
भवंतिनृपवेषाहिवंचयंतिनृपंसदा ॥ ७८ ॥
मस्लतीव्यक्तकरितीनृपअन्यायहीतसा ॥ नृपसावेषकारितीवंचितीनरपासदा ॥ ७८ ॥

तस्त्रियंसज्जयंतिस्मराज्ञिक्रुद्धेहसंतिच
व्याहरंतिचनिर्लज्जाहेलयंतिनृपंक्षणात् ॥७९॥

सजवीतीनृपस्त्रीतेंहंसतीक्रुद्धतोजरी ॥ बकतीबहुनिर्लज्येहाळितीवानृपाक्षणें ॥ ७९ ॥

आज्ञामुल्लंघयंतिस्मनभयंयांत्यकर्मणि
एतेदोषापरीहासक्षमाक्रीडोद्भवान्नृपे ॥८०॥

आज्ञालंघितिदुष्कर्मींपावतीनभयासते ॥ विनोदेंक्रीडनेंनीचींहोतीउत्पन्नदोषहे ॥८०॥

नकार्यंभृतकःकुर्यान्नृपलेखाद्विनाक्वचित्
नाज्ञापयेल्लेखनेनाविनाल्पंवामहन्नृपः ॥ ८१ ॥

नकरावेंकार्यदासेंनृपलेखाविनाकधीं ॥ लेखाविनानआज्ञापीमोठेंवाअल्पहीनृप ॥८१॥

भ्रांतेःपुरुषधर्मत्वाल्लेख्यंनिर्णायकंपरं
अलेख्यमाज्ञापयतिह्यलेख्यंयत्करोतियः ॥८२॥

भ्रांतीहाधर्मपुरुषालेखानिश्चयितांतया॥लेखाविनाजोआज्ञापीत्याविनाहीकरीलजो ॥८२॥

राजकृत्यमुभौचोरौतौभृत्यनृपतीसदा
नृपसंचिन्हितंलेख्यंनृपस्तन्ननृपोनृपः ॥ ८३ ॥

राजकार्यादोनिचोरतेंभृत्यनृपतीसदा ॥ नृपमुद्रालेखराजानराजाकुलसंभव ॥ ८३ ॥

समुद्रंलिखितंराज्ञालेख्यंतच्चोत्तमोत्तमं
उत्तमंराजलिखितंमध्यमंमंत्र्यादिभिःकृतं ॥८४॥

समुद्र।लिहिलेंभूपेंतेंसर्वांमाजिउत्तम ॥ उत्कृष्टतोराजलेखप्रधानाचाहिमध्यम ॥ ८४ ॥

पौरलेख्यंकनिष्ठंस्यात्सर्वसंसाधनक्षमं
यस्मिन्यस्मिन्हिकृत्येतुराज्ञायोधिकृतोनरः ॥८५॥

पौरांचालेखअधमसर्वसाधनयोग्यते ॥ जाजाकामींभूपतिनेंयोजिलेजेतयांनरीं ॥ ८५ ॥

सामात्ययुवराजाद्यैर्यथानुक्रमतश्चसः
दैनिकंमासिकंवृत्तंवार्षिकंबहुवार्षिकं ॥ ८६ ॥

सामात्ययुवराजादिसर्वांनींहीअनुक्रमें ॥ दिवसाचेंहिमासाचेंवर्षाचेंबहुवार्षिक ॥ ८६ ॥

तत्कार्यजातलेख्यंतुराज्ञेसम्यङ्निवेदयेत्
राजाद्यंकितलेख्यस्यधारयेत्स्मृतिपत्रकं ॥ ८७ ॥

तेथीलकार्यलेखातेंस्पष्टभूपासदाविजे ॥ राजचिन्हितलेखाचेंठेवावेंस्मृतिपत्रक ॥ ८७ ॥

कालेतीतेविस्मृतिर्वाभ्रांतिःसंजायतेनृणां
अनुभूतस्यस्मृत्यर्थंलिखितंनिर्मितंपुरा ॥ ८८ ॥

बहुकाळींविस्मृतिवाभ्रांतिवाहोयमानवा ॥ स्मरणाअनुभूताच्यापूर्वीलिखासनिर्मिलें ॥ ८८ ॥

यत्नाच्चब्रह्मणावाचांवर्णस्वरविचिन्हितं
वृत्तलेख्यंतथाचायव्ययलेख्यंमितिद्विधा ॥ ८९ ॥

यत्नेंविधीनेंवाणीचेंस्वरवर्णादिचिन्हित ॥ वर्तमानजमाखर्चायाभेदेंलेखहीद्विधा ॥ ८९ ॥

व्यवहारक्रियाभेदोद्भयंबहुतांगतं
यथोपन्यस्तसाध्यार्थसयुक्तंसोत्तरक्रियं ॥ ९० ॥

व्यवहारक्रियाभेदेंदोहोंचेबहुभेदहो ॥ स्वार्थानुरूपसाध्यार्थसयुक्तेंसोत्तरक्रियें ॥ ९०

सावधारणकंचैवजयपत्रकमुच्यते
सामंतेष्वथभृत्येषुराष्ट्रपालादिकेषुयत् ॥ ९१ ॥

ज्यांतफैसलनेमानेंजयपत्रवदातया ॥ स्वसेवकींवासामंतींसुभेवासर्सुभ्यांसहीं ॥ ९१ ॥

कार्यमादिश्यतेयेनतदाज्ञापत्रमुच्यते
ऋत्विक्पुरोहिताचार्यमन्येष्वभ्यर्चितेषुच ॥ ९२ ॥

वदिजेतेंकार्यजेणेंआज्ञापत्रवदातया ॥ उपाध्यायाज्ञिकाचार्यामान्याकल्याणदातसें ॥ ९२ ॥

कार्यंनिवेद्यतेयेनपत्रंप्रज्ञापनायतत्
सर्वैश्शृणुतकर्तव्यमाज्ञयाममनिश्चितं ॥ ९३ ॥

वदिजेकार्यजेणेतेंजाणाविज्ञप्तिपत्रक ॥ ऐकाहोसर्वकर्तव्यआज्ञेनेंममनिश्चयें ॥ ९३ ॥

स्वहस्तकालसंपन्नंशाननंपत्रमेवतत्
देशादिकंयस्यराज्ञालिखितेनप्रयच्छति ॥ ९४ ॥

स्वहस्तेंकालसंयुक्तजाणाशासनपत्रतें ॥ देशादिजासराजानेंदेइजेतेंहिलेखनीं ९४ ॥

सेवाशौर्यादिभिस्तुष्टःप्रसादलिखितंहितत्
भोगपत्रंतुकरदीकृतंचोपायनीकृतं ॥ ९५ ॥

सेवाशौर्यादिकेंतुष्टेंतोषपत्रतयावदा ॥ भोगाचेंवाकराचेंवानज्ञाणापत्रहीतसें ॥ ९५ ॥

पुरुषावधिकंतत्तुकालावधिकमेववा
विभक्तायेचभ्रात्राद्यास्वरुच्यातुपरस्परं॥ ९६॥

पुरुषावधिवाकांहींकालापर्यंतहीतसें ॥ भावादिवेगळेहोतीस्वइच्छेनेंपरस्पर ॥ ९६ ॥

विभागपत्रंकुर्वंतिभागलेख्यंतदुच्यते
गृहभूम्यादिकंदत्वापत्रंकुर्यात्प्रकाशकं ॥ ९७॥

विभागपत्राकरितीभागलेखतयावदा ॥ घरभूमीसदेऊनीकरितीव्यक्तपत्रतें ॥ ९७ ॥

अनाछेद्यमनाहार्थंदानलेख्यंतदुच्यते
गृहक्षेत्रादिकंक्रीत्वा तुल्यमूल्यप्रमाणयुक्॥ ९८॥

उच्छेदायोग्यनाघेण्यादानपत्रह्मणेंतया ॥ घरभूम्यादिघेऊनीतोलमोलप्रमाणही ॥ ९८॥

पत्रंकारयतेयत्तुक्रयलेख्यंतदुच्यते
जंगमस्छावरंबधंकृत्वालेख्यंकरोतियत् ॥ ९९ ॥

पत्रजेंकरिजेतेंकींखरेदीपत्रतेंवदे ॥ जंगमस्छावराबंधाकरोनीलेखजोकरी ॥ ९९ ॥

ग्रामोदेशश्चयत्कुर्यात्सत्यलेखपरस्परं
राजाविरोधिधर्मार्थसंवित्पत्रंतदुच्यते ॥३०० ॥

ग्रामवादेशकरिजेसत्यलेखपरस्पर ॥ राजाविरोधधर्मार्थसंवित्पत्रवदातया ॥ ३०० ॥

वृध्याधनंगृहीत्वातुकृतंवाकारितंचयत्
ससाक्षिमञ्चतत्प्रोक्तंऋणलेख्यंमनीषिभिः ॥ १ ॥

व्याजूकर्जासघेऊनिकरिजेलेंकरीवलें॥ साक्षियुक्तात्रोलिजेलेंविद्वानीऋणपत्रक ॥ १ ॥

अभिशापेसमुत्तीर्णेप्रायश्चितेकृतेबुधैः
दत्तंलेख्यंसाक्षिमद्यछुद्धिपत्रंतदुच्यते ॥ २ ॥

तापवादविबुधप्रायाश्चितेंकरूनियां ॥ ससाक्षजेंदिलेंपत्रवदतीशुद्धिपत्रतें ॥ २ ॥

मेलयित्वास्वधनांशान्व्यवहार्यसाधकाः
कुर्वंतिलेखपत्रंयत्तच्चसामायिकंस्मृतं ॥ ३ ॥
स्वधनांशामेळउनीव्यवहारासमाधक ॥ करितीजेंलेखपत्रतयासामायिकावदा ॥ ३ ॥

सभ्याधिकारिप्रकृतीसभासद्भिर्नयःकृतः
तत्पत्रंवाद्यमान्यंचेज्ज्ञेयंसंमतिपत्रकं ॥ ४ ॥
सभ्याधिकारिप्रकृतीकेलानयसभासदीं ॥ तयांचेंजेंपत्रतयाजाणासंमतिपत्रक ॥ ४ ॥

स्वकीयवृत्तज्ञानार्थंलिख्यतेयत्परस्परं
श्रीमंगलपदाद्यंवासपूर्वोत्तरपक्षकं ॥ ५ ॥
स्ववर्तमानजाणायालिहिजेंजेंपरस्पर ॥ श्रीपूर्वमंगलपदसपूर्वोत्तरपक्षही ॥ ५ ॥

असंदिग्धमगूढार्थंस्पष्टाक्षरपदंसदा
अन्यव्यावर्तकस्वात्मपरपित्रादिनामयुक् ॥ ६ ॥
सुस्पष्टजेंअगूढार्थस्पष्टतींअक्षरेंपदें ॥ अन्यवारकापित्रादिस्वपरानामसंयुत ॥ ६ ॥

एकद्विबहुवचनैर्यथार्हस्तुतिसंयुतं
समामासतदर्धाहर्नामजात्यादिचिन्हितं ॥ ७ ॥
येकेरीबहुमानेवायथायोग्यस्तुतीयुत ॥ वर्षमासपक्षिमितिनामजात्यादिचिन्हित ॥ ७ ॥

कार्यबोधिसुसंबंधंनत्याशीर्वादपूर्वकं
स्वाम्यसेवकसेव्यार्थक्षेमपत्रंतुतत्स्मृतं ॥ ८ ॥
कार्याबोधीससंबंधआशिर्वादनतीयुत ॥ स्वामिसेवकसेव्यार्थक्षेमपत्रवदातया ॥ ८ ॥

एभिरेवगुणैर्युक्तंस्वाधर्षकविबोधकं
भाषापत्रंतुतज्ज्ञेयमथवावेदनार्थकं ॥ ९ ॥
याहीगुणीयुक्तनिजापीडाकारकसूचक ॥ कांहींहीबोधणेंकिंवाअर्जीपत्रवदातया ॥ ९ ॥

प्रदर्शितंवृत्तलेख्यंसमासाल्लक्षणान्वितं
समासात्कथ्यतेचान्यच्छेपायव्ययबोधकं ॥ १० ॥
स्वभाववृत्तकथिलालेखलक्षणसंयुत ॥ समासेंसांगिजेलेखजमाखर्चविबोधक ॥ १० ॥

व्याप्यव्यापकभेदैश्चमूल्यमानादिभिःपृथक्
विशिष्टसंज्ञितैस्तद्वियथार्थैर्बहुभेदयुक् ॥ ११ ॥
सद्दरेंपोटचींतेवीमोलमानादिवेगळीं ॥ विशेषसंज्ञासहितयथार्थेबहुभेदित ॥ ११ ॥

वत्सरेवत्सरेवापिमासिमासिदिनेदिने
हिरण्यपशुधान्यादिस्वाधीनंचायसंज्ञकं ॥ १२ ॥
प्रतिसंवत्सरींमासींदीनींद्रव्यसुवर्णजें ॥ पशुधान्यनिजाधीनवदावेंयाजलाजमा ॥ १२ ॥

पराधिनिंकृतंयत्तुव्ययसंज्ञंधनंचतत्
साधरुकश्चैवप्राचीनआयःसंचितसंज्ञकः ॥ १३ ॥
केलेंपराधिनजयाखर्चसंज्ञातया असे ॥ नवीकिंवाजुनीतैसीजमासंज्ञातयावदा ॥ १३ ॥

व्ययोद्विधाचोपभुक्तस्तथाविनिमयात्मकः
निश्चितान्यस्वामिकश्चानिश्चितस्वामिकंतथा १४
दोनभेदेंखर्चभोगतसाकेवळखर्चहीं ॥ निश्चयानेंपराचेंवानाहींमालकज्यासवा ॥ १४ ॥

स्वस्वत्वनिश्चितंचेतित्रिधंविसंचितंमतं
निश्चितान्यःस्वामिकंयध्धनंतुत्रिविधंहितत् ॥ १५ ॥
आपलेनिश्चयानेंजेंअशीत्रिविधहीजमा ॥ पराचेंनिश्चयानेंजेंधनत्रिविधहेंअसे ॥ १५ ॥

औपनिध्यंयाचितकमौत्तमार्णिकमेवच
विस्रंभान्निहितंसद्भिर्यदौपनिधिकंहितत् ॥ १६ ॥
मागतिलेलेंवाकर्जतसेंउपानिधीकत ॥ विश्वासेंठेविजेलेंजेंजाणाउपनिधीतया ॥ १६ ॥

अवृद्धिकंगृहीतान्यालंकारादिचयान्वितं
सवृद्धिकंगृहीतंयदृणंतच्चौत्तमार्णिकं ॥ १७ ॥
विनाव्याजेंघेतलेंजेंदागिनेद्रव्यवातसें ॥ सव्याजघेइजेलेंजेंऔत्तमर्णिककर्जतें ॥ १७ ॥

निध्यादिकंचमार्गादौप्राप्तमज्ञातस्वामिकं
साहजिकंचाधिकंचद्विधास्वस्वत्वनिश्चितं ॥ १८ ॥
जेंप्राप्तमार्गींपुरलेंआज्ञातस्वामितेंवदा ॥ सहजप्राप्तजेंव्याजाद्विधास्वीयधनावदा ॥ १८ ॥

उत्पद्यतेयेनियतोदिनेमासिचवत्सरे
आयःसाहजिकःसैवदायाद्यश्चस्ववृत्तितः ॥ १९ ॥
नेमेंउत्पन्नजेंहोईवत्सरींमासिंवादिनीं ॥ जमासहजतीजाणाभ्रातृभागेंस्ववृत्तिज ॥ १९ ॥

दायःपरिग्रहोयत्तुप्रकृष्टंतत्स्वभावजं
मौल्याधिक्यंकुसीदंचगृहीतंयाजनादिभिः ॥२०॥
जोदायेंआंदणेंप्राप्तजाणात्यासस्वभावज ॥ मोलाधिककुसीदाख्ययाज्ञिकीनेंमिळेलजें २० ॥

पारितोष्यंभृतिप्राप्तंविजिताद्यंधनंचयत्
स्वस्वात्वेधिकसंज्ञंतदन्यत्साहाजिकंस्मृतं ॥ २१ ॥
बक्षीसवेतनतसेंजिंकिलेलेंहिंजेंधन ॥ अधीकजेंनिजाहूनीतयासाहाजिकावदा ॥ २१ ॥

पूर्ववत्सरशेषंचवर्तमानाब्दसंभवं
स्वाधीनंसंचितंद्वेधाधनंसर्वंप्रकीर्तितं ॥ २२ ॥
जमामागीलवर्षांचीतशीहीहालसालची ॥ स्वाधीनहीसांचवलींद्विधाहेंद्रव्यसर्वही ॥ २२ ॥

द्वेधाधिकंसाहजिकंपार्थिवेतरभेदतः
भूमिभागसमुद्भूतआयःपार्थिवउच्यते ॥ २३ ॥
द्विधाआधीकसहजपृथ्वीचेंअन्यवातसें ॥ जोयेतसेभूमिभागजमापार्थीवतीवदा ॥ २३ ॥

सदेवकृत्रिमजलैर्देशग्रामपुरैःपृथक्
बहुमध्याल्पफलतोभिद्यतेभुविभागतः ॥ २४ ॥
पर्जन्येंकृत्रिमजलेंदेशींग्रामींपुरींपृथक् ॥ बहुमध्येंअल्पफलेंभुविभागासपावते ॥ २४ ॥

शुल्कदंडाकरकरभाटकोपायनादिभिः ॥
इतरःकिर्तितस्तज्ज्ञैरायोलेखविशारदैः ॥ २५ ॥
जखादंदंडखाणीचानजाणाकरभारही ॥ जमाइतरहीसंज्ञावदिलीसूज्ञकार्कुनीं ॥ २५ ॥

यन्निमित्तोभवेदायोव्ययस्तन्नामपूर्वकः
व्ययश्चैवंसमुद्दिष्टोव्याप्यव्यापकसंयुतः ॥ २६ ॥
जानिमित्तेंजीजमायेखर्चतन्नामपूर्वक ॥ व्ययऐसासांगिजेलाथोराल्पसदरेंयुत ॥ २६ ॥

पुनरावर्तकः स्वत्वनिवर्तकइतिद्विधा
व्ययोयन्निध्युपनीधिकृतोविनिमयैर्वृतः ॥ २७ ॥
दुवेजींएकवेजींवाजाणावाखर्चहीद्विधा ॥ निधीतेवीउपनिधीतेवीविनिमयात्मक ॥ २७॥
सुकुसीदाकुसीदाधमर्णिकश्चावृत्तःस्मृतः
निधिर्भूमौविनिहितोन्यास्मिन्नुपनिधिःस्थितः ॥२८॥
व्याजूबिन्व्याजुवातैसाऋणकाआवृतावदा ॥ निधिभूगपराधनिजाणाउपानिधीतया ॥२८॥
दत्तमूल्यादिसंप्राप्तःसर्वैविनिमयीकृतः
वृध्यावृध्याचयोदत्तोसवैस्यादाधमर्णिकः ॥ २९ ॥
दिल्याचेंमोलजेंप्राप्तजाणाविनिमयातया॥विन्व्याजव्याजविादत्तजाणात्याआधमर्णिक २९
सवृद्धिकमृणंदत्तमकुसीदंतुयाचितं
स्वत्वंनिवर्तकोद्वेधात्वैहिकःपारलौकिकः ॥ ३० ॥
सव्याजकर्जदत्ताख्यअव्याजूतेंउधारहो ॥खर्चद्विधायेकवेजींइथलापरलोकचा ॥ ३० ॥
प्रतिदानंपारितोष्यंवेतनंभोग्यमैहिकः
चतुर्विधस्तथापारलौकिकोनंतभेदभाक् ॥ ३१ ॥
देणेपरतवक्षसिदर्माहाभोगयेथला ॥ चतुर्धापरलोकींचाअनंतविधतोअसे ॥ ३१ ॥
शेषेसंयोजयेन्नित्यंपुनरावर्तकोव्ययः
मूल्यत्वेनचयद्दत्तंप्रातिदानंस्मृतंहितत् ॥ ३२ ॥
शेषबाकींतयोजावानित्यजोपरतेंव्यय ॥ दिलेंमोलपणेंजेंकांप्रातिदानवदातया ॥ ३२ ॥
सेवाशौर्यादिसंतुष्टैर्दत्ततत्पारितोषिकं
भृतिरूपेणसंदत्तवेतनंतत्प्रकीर्तितं ॥३३॥
सेवाशौर्यादिकेंतुष्टेंदिलेंतेंपारितोषिक ॥ चाकरीनेंदिलेंजेंकांतयावेतनबोलती ॥ ३३ ॥
धान्यंवस्त्रगृहारामगोगजादिरथार्थकं
विद्याराज्याद्यर्जनार्थंधनाप्त्यर्थंतथैवच ॥ ३४ ॥
धान्यावस्त्राघराबागेगोगजादिरथार्थजें ॥ मिळवायाराज्यविद्याधनप्राप्त्यर्थहीतसें ॥३४ ॥

व्ययीकृतंरक्षणार्थमुपभोग्यंतदुच्यते
सुवर्णरत्नरजतनिष्कशालास्तथैवच ॥ ३५ ॥

जोखर्चरक्षणासाठींउपभोग्यवदातया ॥ सुवर्णरत्नहीचांदीनिष्कशालातशादुजा ॥ ३५॥

रथाश्वगोगजोष्ट्राजाविनशालाःपृथक्पृथक्
वाद्यशस्त्रास्त्रवस्त्राणांधान्यसंभारयोस्तथा ॥ ३६ ॥

शेळ्यामेंढ्यागोरथाश्वगजोष्ट्रशालिकापृथक् ॥ बाजेशस्त्रास्त्रस्त्रांचाधान्यसंभारशालिका ३६

मंत्रीशिल्पनाट्यवैद्यमृगाणांपाकपक्षिणां
शालाभोग्येनिविष्टास्तुतद्व्ययोभोग्यउच्यते ।३७।

मंत्रीमिस्त्रीनृत्यवैद्यमृगमुत्पाककालिका ॥ पक्षाच्याभोग्यसदरींतयांचाभोग्यखर्चतो ।३७।

जपहोमार्चनैर्दानैश्चतुर्धापारलौकिकः
पुनर्यातोनिवृत्तश्चविशेषायव्ययौचतौ ॥ ३८ ॥

जपहोमार्चनींदानींचारहेपारलौकिक आलाफीरुनजाईजोजमाखर्चविशेषतो ॥ ३८ ॥

आवर्तकोनिवर्तीचव्ययायौतुपृथग्द्विधा
आवर्तकविहीनौतुव्ययायौलेखकोलिखेत् ॥ ३९ ॥

पाठीयेणारजाणाराखर्चआणिजमाद्विधा ॥ नफिर्तेजेजमाखर्चलिहावेंकार्कुनेंतयां । ३९ ।

क्रयाधमर्णघटनान्यस्छलाप्तेविवर्तकः
द्रव्यंलिखित्वादद्यात्तुग्रहीत्वाविलिखेत्स्वयं॥४०॥

कर्जवाविक्रयाविणअन्यतेनाफिरेकदा ॥ पूर्वीलिहूनियांद्यावेंघेउनीलिहिजेमग ॥ ४० ॥

हीयतेवर्धतेनैवमायव्ययविलेखकः
हेतुप्रमाणसंबंधकार्यांगव्याप्यव्यापकैः ॥ ४१ ॥

नवाढेनघटेऐसाजमाखर्चेहिकार्कुना ॥ हेतुप्रमाणसंबंधकार्यांगेंव्याप्यव्यापकें ॥ ४१ ॥

आयाश्चबहुधाभिन्नाव्ययाःशेषंपृथक्पृथक्
मानेनसंख्ययाचैवोन्मानेनपारिमाणकैः ॥ ४२ ॥

जमाबहुविधातैसेखर्चहीबाकिवेगळे ॥ संख्येनेंवाहिमानानेंउन्मानेंपरिमाणकें ॥ ४२ ॥

क्वचित्संख्याक्वचिन्मानमुन्मानंपरिमाणकं
समाहारःक्वचिच्चेष्टोव्यवहारायतद्विदां ॥ ४३ ॥

कोठेंसंख्यामानकोठेंउन्मानपरिमाणही ॥ कोठेंसमाहारइष्टव्यवहारांतजाणत्या ॥ ४३ ॥

अंगुलाद्यंस्मृतंमानमुन्मानंचतुलास्मृता
परिमाणंपात्रमानंसंख्यैकद्यादिसंज्ञिका ॥ ४४ ॥

अंगुळाचेंहोयमानतोलउन्मानजाणिजे ॥ परिमाणवदामापासंख्याएकादिजाणिजे ॥ ४४ ॥

यत्रयादृग्व्यवहारस्तत्रतादृक्प्रकल्पयेत्
रजतस्वर्णताम्रादिव्यवहारार्थमुद्रितं ॥ ४५ ॥

व्यवहारजसाजेथेंतसातेथेंहिकल्पिजे ॥ चांदीसुवर्णताम्रादिव्यवहारासमुद्रित ॥ ४५ ॥

व्यवहार्यंवराटाद्यंरत्नांतंद्रव्यमीरितं
सपशुधान्यवस्त्रादितृणांतंधनसंज्ञकं ॥ ४६ ॥

कवड्यादिव्यवाहारींरत्नांताद्रव्यबोलती ॥ सपशुधान्यवस्त्रादितृणांतधनसंज्ञक ॥ ४६ ॥

व्यवहारेचाधिकृतंस्वर्णाद्यंमूल्यतामियात्
कारणादिसमायोगात्पदार्थस्तुभवेद्भुवि ॥ ४७ ॥

व्यवहारींठेविलेलेंस्वर्णादीमोलपावतें ॥ तयाकारणसंयोगेंभूवरींहोपदार्थतो ॥ ४७ ॥

येनव्ययेनसंसिद्धस्तद्व्ययस्तस्यमूल्यकं
सुलभासुलभत्वाच्चागुणत्वगुणसंश्रयैः ॥ ४८ ॥

जेणेंजेणेंसिद्धहोयखर्चमूळतयासते ॥ कठिणेंवाहिसुलभेंअगणेंवागुणाश्रयें ॥ ४८ ॥

यथाकामात्पदार्थानामनर्घमाधिकंभवेत्
नहीनंमणिधातूनांक्वचिन्मूल्यंप्रकल्पयेत् ॥ ४९ ॥

स्वेच्छजैसेंपदार्थाचेंमोलहोयअधीकतें ॥ नहीनमणिधातूचेंकदाहीमोगलकल्पिजे ॥ ४९ ॥

मूल्यहानिस्तुचैतेषांराजदौष्ट्येनजायते
दीर्घेचतुर्भागभूतपत्रेतिर्यग्गतावलिः ॥ ५० ॥

मोलाहानीहियांचीहोभूपदुष्टअसेजरी ॥ मोडल्याकागदामाजींलिहावीओळआडवी ॥ ५० ॥

त्र्यंशगाभ्यंतरगताचार्धगापादगापिवा
कार्याव्यापकव्याप्यानांलेखनेपदसंज्ञिका ॥५१॥
तीरकानीआंततिच्यादुरकानीरिकानिंही॥करीव्यापकव्याप्याच्यालिहीण्यापदनामिका ५१
श्रेष्ठाभ्यंतरगातासुवामनरुत्र्यंशगाप्यनु
दक्षत्र्यंशगताचानुह्यर्धगापादगाततः ॥५२॥
तयांतआंतलीश्रेष्ठतिरकानीहिंडाविजी ॥ उजवीतिरकानीचीदुरकानीरकानिही॥५२॥
स्वभ्यंतरेस्वभेदाःस्युःसदृशाःसदृशेपदे
स्वारंभपूर्तिसदृशेपदगेस्तःसदैवहि ॥५३॥
स्वपोटींआपलेभेदबरोबर्चेबरोबर ॥ आरंभपूर्णतातुल्यसदरेजोबरोबर ॥५३॥
राजास्वलेख्यचिन्हंतुयथाभिलषितंतथा
लेखानुरूपेकुर्यात्विदृष्ट्वालेख्यंविचार्यच ॥५४॥
राजाकरिस्वाचिन्हातेंस्वइछाजेंवितोवितें ॥ लेखानुरूपकरिजेविचारूनीहिपाहुनी ॥५४॥
मंत्रीचप्राड्विवाकश्चपंडितोदूतसंज्ञकः
स्वाविरुद्धंलेख्यमिदंलिखेयुःप्रथमंत्विमे ॥५५॥
मंत्रीतसाप्राड्विवाकदुजापंडितदूतही ॥ निजाविरुद्धलेखातेंयांनींपूर्वीचलेखिजे ॥५५॥
अमात्यःसाधुलिखितमस्त्येतत्प्राक्लिखेदयं
सम्यग्विचारितमितिसुमंत्रोविलिखेत्ततः ॥५६॥
आमात्यसाधुलिहिलेंआहेपूर्वीअसेंलिही ॥ विचारिलेंचांगलेंमीसुमंत्रलिहिजेमग ॥५६॥
सत्यंयथार्थमितिचप्रधानश्चलिखेत्स्वयं
अंगीकर्तुंयोग्यमितिततःप्रतिनिधिर्लिखेत् ॥५७॥
यथार्थसत्यंहेंआहेप्रधानीलिहिजेअसें ॥ आंगीकारायोग्यअसेंलिहिप्रतिनधीमग ॥५७॥
अंगीकर्तव्यमितिचयुवराजालिखेत्स्वयं
लेख्यंस्वाभिमतंचैतद्विलिखेच्चपुरोहितः ॥५८॥
स्वीकारावेंयासअसेंयुवराजालिहीमग ॥ आहेस्वमतहालेखपुरोहितलिहीअसें ॥५८॥

स्वस्वमुद्राचिन्हितंचलेख्यांतेकुर्युरेवाहि
अंगीकृतमितिलिखेन्मुद्रयेच्चततोनृपः ॥ ५९ ॥
आपलीआपलीमुद्रालेखांतकरजिमग स्वीकारिलामीलिहिजेमुद्रिजेमगतोनृपें ॥ ५९ ॥
कार्यांतरस्याकुलत्वात्सम्यक्द्रष्टुंनशक्यते
युवराजादिभिर्लेख्यंतदानेनचदर्शितं ॥ ६० ॥
कार्यांतरींसक्तपणेंपाहायानशकेजरी ॥ युवराजादिकींत्यातेंपाहिजावेंसुदर्शित ॥ ६० ॥
समुद्रंविलिखेयुर्वैसर्वेमंत्रिगणास्ततः
राजादृष्टमितिलिखेद्राग्सम्यग्दर्शनाक्षमः ॥ ६१ ॥
साचिन्हसर्वीलिहिजेप्रधानानींसदैवही ॥ राजादृष्टअसालेखकरीसम्यक्नपाहतां ॥ ६१ ॥
आयमादौलिखेत्सम्यग्व्ययंपश्चाद्यथागतं
वामेचायंव्ययंदक्षेपत्रभागेचलेखयेत् ॥ ६२ ॥
जमेतेंपूर्वीलिहिजेखर्चातेंमगतोलिही ॥ डावेबाजूजमापत्रींउजवेबाजुखर्चतो ॥ ६२ ॥
यत्रोभौव्यापकव्याप्यौवामोर्ध्वभागगौक्रमात्
आधाराधेयरूपौवाकालार्थौगणितंहितत् ॥ ६३ ॥
जिथेहेव्यापकव्याप्यडावेहेवरतींक्रमें ॥ आधाराधेयकालार्थेंतयागणितहीतसें ॥ ६३ ॥
अधोधश्चक्रमात्तत्रव्यापकंवामतोलिखेत्
व्याप्यानांमूल्यमानादितत्पंक्त्यांविनिवेशयेत् ६४
डावेखालींक्रमेंतेथेंव्यापकालागितोलिही ॥ व्याप्याचेंमोलमानादित्याचओळींनिवेशिजे ॥ ६४ ॥
ऊर्ध्वगानांतुगणितमधःपंक्त्यांप्रजायते
यत्रोभौव्यापकव्याप्यौव्यापकत्वेनसंस्थितौ ६५ ।
वरच्याचेंहिगणितखालच्याओळिंहीतसें ॥ जिथेहेव्यापकव्याप्यव्यापकत्वासपावती ॥ ६५ ॥
व्यापकंबहुवृतित्वंव्याप्यंस्यान्यूनवृत्तिकं
व्याप्याश्चावयवाःप्रोक्ताव्यापकावयवीस्मृतः ६६
बहुरकमींव्यापकतेनाहींतेंव्याप्यजाणिजे ॥ व्याप्यजाणाअवयवाव्यापकावयवींवदा ॥ ६६ ॥

सजातीनांचलिखनंकुर्याच्चसमुदायतः
यथाप्राप्तंतुलिखनमाद्यंनसमुदायतः ॥६७॥

सजातीचेंहिलिहिणेंसमुदायेंकरीतसे ॥ येईतसेंलिहीपूर्वींसमुदायपणेंनतें ॥ ६७ ॥

व्यापकश्चपदार्थावायत्रसंतिस्थलानिहि
व्याप्यमायंव्ययंतत्रकुर्यात्कालेनसर्वदा ॥ ६८॥

पदार्थवाव्यापकवाजिथतींआसनेंबहू ॥ व्याप्याकरीजमाखर्चातिथेंकालेंकरूनियां॥६८॥

स्थानाटिप्पणिकाचैषाततोन्यत्संघाटिप्पणं
विशिष्टसंज्ञितंतत्रव्यापकंलेख्यभाषितं ॥६९॥

आसनाचीरोजकीर्दमोठ्याबोटखतावदा ॥ विशिष्टनामकतसाताळेबंदाहिव्यापक॥६९॥

आयाःकतिव्ययाःकस्यशेषंद्रव्यस्यचास्तिवै
विशिष्टसंज्ञकैरेषांसंविज्ञानंप्रजायते ॥७०॥

जमाकितीखर्चकसाकोणाचाशेषकायतें ॥ विशिष्टताळेबंदानेंतयाचेंज्ञानहोतसे ॥ ७०॥

आदौलेख्यंयथाप्राप्तंपश्चात्तद्गणितंलिखेत्
यथाद्रव्यंचस्थानंचाधिकसंज्ञंचटिप्पणैः ॥ ७१ ॥

आधींलिहीयेइजैसेंकारिजेबेरजेमग ॥ जसेंद्रव्यजसेंस्थानजाणेअधिकटिप्पणें ॥ ७१ ॥

शेषायव्ययविज्ञानंक्रमाल्लेख्यैःप्रजायते
स्थलायव्ययविज्ञानंव्यापकस्थलतोभवेत् ।७२।

बाकीजमाखर्चज्ञानक्रमेंलेखेंचहोतसे ॥ स्थानखर्चजमाज्ञानव्यापकस्थानिहोतसे॥ २ ॥

पदार्थस्यस्थलानिस्युःपदार्थाश्चस्थलस्यतु
व्याप्यास्तिथ्यादयश्चापियथेष्टालेखनेनृणां ।७३।

रकमेचींआसनेंहोस्थानाचारकमात्तशा।व्याप्यतिथ्या।दिजाण।व्यास्वइच्छेंलिहिण्यानरा।७३

निश्चितान्यस्वामिकाद्याआयायेइतरांतगाः
विशिष्टसंज्ञिकायेचपुनरावर्तकादयः ॥ ७४ ॥

परकीयादिकजमातशाइतरसंज्ञक ॥ विशिष्टसंज्ञकतशापुनरावर्तकादिक ॥ ७४ ॥

व्ययाश्चपरलोकांताअंतिमव्यापकाश्चते
इछयाताडितंकृत्वादौप्रमाणफलंततः ॥ ७५ ॥

जेखर्चपरलोकांतअंतिचेतेचिव्यापक ॥ इच्छेनेंगुणिजेआधींप्रमाणफलतेंमग ॥ ७५ ॥

प्रमाणभक्तंतल्लब्धंभवेदिछापलंनृणां
समासतोलेख्यमुक्तंसर्वेषांस्मृतिसाधनं ॥७६॥

प्रपाणभागेंजेंलब्धतेंइछाफलहोनरा ॥ संक्षेपेंकथिलेंलेख्यसर्वांचेंस्मृतिसाधन ॥ ७६ ॥

गुंजामाषस्तथाकर्षःपदार्धेप्रस्छएवहि
यथोत्तरादशगुणापंचप्रस्छस्यचाढकाः ॥ ७७ ॥

गुंजमासातसाकर्षपदार्धप्रस्छहीतसा ॥ पुढेंपुढेंदशगुणप्रस्छांचेपांचआढक ॥ ७७ ॥

ततश्चाष्टाढकःप्रोक्तोह्यर्मणस्तेनुविंशतिः
खारिकास्माद्भिद्यतेतद्देशेदेशेप्रमाणकं ॥ ७८ ॥

पुढेंअष्टाढकतयावीसतेंहोयअर्मण ॥ पुढेंहोखारिकादेशभेदेंहेभेदपावती ॥ ७८ ॥

पंचांगुलावटंपात्रंचतुरंगुलविस्तृतं
प्रस्छपादंतुतज्ज्ञेयंपरिमाणेसदाबुधैः ॥ ७९ ॥

खोलबोटेंपांचमापचारअंगुलरूंदते ॥ प्रस्छाचाचवथाहिस्साप्रमाणींजाणिजेतया ॥ ७९ ॥

उर्ध्वांकश्चयथासंज्ञस्तदधस्छाश्चवामगाः
क्रमात्स्वदर्शगुणिताःपरार्धांताःप्रकीर्तिताः । ८० ।

वरअंकहिजीसंख्याडावेबाजूतयःपुढें ॥ क्रमेंदसपटेंसंख्यापरार्धांत्तहिजाणिजे ॥ ८० ॥

नकर्तुंशक्यतेसंख्यासंज्ञाकालस्यदुर्गमात्
ब्रह्मणोद्विपरार्धंतुआयुरुक्तंमनीषिभिः ॥ ८१ ॥

करायायेइनासंख्याकालआहेअसंख्यतो ॥ परार्धब्रह्मदेवाचेंदोनआयुष्यतेंअसे ॥ ८१ ॥

एकोदशशतंचैवसहस्त्रंचायुतंक्रमात्
नियुतंप्रयुतंकोटिरर्बुदंचाब्जखर्वकौ ॥ ८२ ॥

येकदाहाशंभरतेहजारदशहजारते ॥ लक्षदाहालक्षकोटीअर्वअब्जाहिखर्वते ॥ ८२ ॥

निखर्वपद्मशंखाब्धिमध्यमांतपरार्धकाः
कालमानंत्रिधाज्ञेयंचांद्रंसौरंचसावनं ॥ ८३ ॥

निखर्वपद्मशंखाब्धिमध्यअंतपरार्धते ॥ कालमानत्ऱ्हातीनचांद्रसौराहिसावन ॥ ८३ ॥

भृतिदानेसदासौरंचांद्रंकौसीदवृद्धिषु
कल्पयेत्सावनंनित्यंदिनभृत्येवधौसदा ॥ ८४ ॥

वेतनींतेंसौरमानकुसीदव्याजिंचांद्रतें ॥ कल्पिजावेंसावनतेंमजूरीरोजदारते ॥ ८४ ॥

कार्यमानाकालमानाकार्यकालमितिस्त्रिधा
भृतिरुक्तातुतद्विज्ञैःसादेयाभाषितायथा ॥ ८५ ॥

कामेंवाकालमानेंवाकार्यकालेंअसीत्रिधा ॥ जाणावेंवेतनाद्यावेंजसीबोलीअसेतसी ॥ ८५ ॥

अयंभारस्त्वयातत्रस्थाप्यस्त्वेतावतींभृतिं
दास्यामिकार्यमानासाकीर्तितातद्विदेशकैः । ८६ ।

तूंहाभारातिथेंनेईंइतकेंतुजदेइन ॥ इजारावदतीयातेंनीतीतेंजाणतेनर ॥ ८६ ॥

वत्सरेवत्सरेवापिमासिमासिदिनेदिने
एतावतींभृतिंतेहंदास्यामीतिचकालिका ॥ ८७ ॥

प्रतिसंवत्सरींकिंवाप्रतिमासींदिनींतसें ॥ इतकेंदेइनतयाजाणाकालिकवेतन ॥ ८७ ॥

एतावताकार्यमिदंकालेनापित्वयाकृतं
भृतिमेतावतींदास्येकार्यकालमिताचसा ॥ ८८ ॥

इतक्याकालिंहेंकामइतकेंकरिजेजरी ॥ इतकेंदेइनतुलाजाणातेंकार्यकालिक ॥ ८८ ॥

नकुर्याद्भृतिलोपंतुतथाभृतिविलंबनं
अवश्यपोष्यभरणाभृतिर्मध्याप्रकीर्तिता ॥ ८९ ॥

वेतनाचालोपनतोउशीराहिनयेकरूं ॥ जेणेकुटुंबभरणजाणेमध्यमवेतन ॥ ८९ ॥

परिपोष्याभृतिःश्रेष्ठासमात्राच्छादनार्थिका
भवेदेकस्यभरणंययासाहीनसंज्ञिका ॥ ९० ॥

अधीकयाहुनीश्रेष्ठअन्नाछादनसर्वही ॥ येकाचेंहोयभरणनिर्णेंतीहीनजाणिजे ॥ ९० ॥

यथायथातुगुणवान्भृतकस्तद्भृतिस्तथा
संयोज्यातुप्रयत्नेननृपेणात्महितायवै ॥ ९१ ॥

जसाजसाहोगुणवान्तसेंवेतनसेवका ॥ योजावेंनरपेंयत्नेंस्वहितासाठिंसर्वदा ॥ ९१॥

अवश्यपोष्यवर्गस्यभरणंभृतकाद्भवेत्
तथाभृतिस्तुसंयोज्यातद्योग्याभृतकायवै ॥ ९२ ॥

अवश्यपोष्यवर्गाचेंजेणेंभरणहोतसे ॥ तसेंवेतनयोजावेंयोग्यपाहूनसेवक ॥ ९२ ॥

येभृत्याहीनभृतिकाःशत्रवस्तेस्वयंकृताः
परस्यसाधकास्तेतुछिद्रकोशप्रजाहराः ॥ ९३॥

थोडेंजयांवेतनतेशत्रूतेंहीस्वयेंकृत ॥ दुसऱ्याचेसेवकतेछिद्रद्रव्यप्रजाहर ॥ ९३ ॥

अन्नाछादनमात्राहिभृतिशूद्रादिषुस्मृता
तत्पापभाग्यन्यथास्यात्पोषकोमांसभोजिषु ।९४।

जेंअन्नाछादनापुतेंशूद्रावेतनदेइजे ॥ तयाचापापभागींहोअन्यथामांसभोजिचा ॥ ९४॥

यद्ब्राह्मणेनापत्हृतंधनंतत्परलोकदं
शूद्रायदत्तमपियन्नरकायैवकेवलं ॥९५॥

हरितांहोब्राह्मणानेंपरलोकदतेंधन ॥ शूद्रासजेंदिलेंतेंहीनरकालागिंकारण ॥ ९५ ॥

मंदोमध्यस्तथाशीघ्रस्त्रिविधोभृत्यउच्यते
समामध्याचश्रेष्ठाचभृतिस्तेषांक्रमात्स्मृता ।९६।

मंदमध्यतसाशीघ्रात्रिधासेवकहीअसे ॥ सममध्यमहीश्रेष्ठतयावेतनहीतसें ॥ ९६ ॥

भृत्यानांगृहकृत्यार्थंदिवायामंसमुत्सृजेत्
निशियामत्रयंन्नित्यंदिनभृत्येर्धयामकं ॥ ९७ ॥

गृहकार्यसेवकांतेंदिनींप्रहरसोडिजे ॥ रात्रींसतीनप्रहरमजूराचार्धघडीदिनीं ॥ ९७ ॥

तेभ्यःकार्यंकारयीतत्युत्सवाहैर्विनान्नृपः
अत्यावश्यंतूत्सवेपिहित्वाश्रात्धदिनंसदा॥९८ ॥

तयांहातींकरीकामासणांतेंसूटदेइजे ॥ अत्यावश्यसणालाहीत्यजीश्राद्धादिनातरी ॥ ९९ ॥

पादहीनांभृतिंत्वार्तेदद्यात्त्रैमासिकींततः
पंचवत्सरभृत्येतुन्यूनाधिक्यंयथातथा ॥ ९९ ॥

यावेवेतनचव्थाईरोग्यावातीनमासिंचें ॥ जुनाजोपांचवर्षांचान्यूनाधिक्यजसेंतसें ॥९९ ॥

षाण्मासिकींतुदीर्घार्तेतदूर्ध्वंनचकल्पयेत्
नैवपक्षार्धमार्तस्यहातव्याल्पापिवैभृतिः । ४०० ।

दीर्घरोग्यासाहामासत्यापुढेंनाचिकल्पिजे ॥ आर्तपक्षार्धपर्यंतावेतनानकमीकरी ॥४००॥

शश्वत्सदोषितस्यापिग्राह्यःप्रतिनिधिस्ततः
सुमहद्गुणिनंत्वार्तंभृत्यर्धंकल्पयेत्सदा ॥ १ ॥

होतांवारंवारआर्तत्याच्यावदलीसघेईजे ॥ मोठागुणीआर्तजरीअर्धवेतनदेइजे ॥ १ ॥

सेवांविनानृपःपक्षंदद्याद्भृत्यायवत्सरे
चत्वारिंशत्समानीताःसेवयायेनवैनृपः ॥ २ ॥

सेवेविनायेकपक्षदेईवर्षासेवका ॥ वर्षेंचोवीसतींजिणेंकेलीसेवातयानृपें ॥ २ ॥

ततःसेवांविनातस्मैभृत्यर्धंकल्पयेत्सदा
यावज्जीवंतुतत्पुत्रेऽक्षमेबालेतदर्धकं ॥ ३ ॥

मगसेवेविनात्यातेंअर्धवेतनदेईजे ॥ यावज्जीवतयापुत्रायोग्याबाळासअर्धतें ॥ ३ ॥

भार्यायांवासुशीलायांकन्यायांवास्वश्रेयसे
अष्टमांशंपारितोष्यंदद्याद्भृत्यायवत्सरे ॥ ४ ॥

सुशीलस्त्रीसकन्येतेंस्वकल्याणार्थदेइजे ॥ वेतनाचाअष्टमांशद्यावावर्षासेवका ॥४॥

कार्याष्टमांशंवादद्यात्कार्यंद्रागधिकंकृतं
स्वामिकार्येविनष्टोयस्तत्पुत्रेतद्भृतिंवहेत् ॥५॥

कार्याष्टमांशवाफुर्तीजरीकामअधीकतें ॥ जोनष्टहोस्वामिकार्यींतत्पुत्रादेइवेतन ॥ ५ ॥

यावद्बालेन्यथापुत्रगुणान्दृष्ट्वाभृतिंवहेत्
षष्ठांशंवाचतुर्थांशंभृतेर्भृत्यस्यपालयेत् ॥ ६ ॥

गुणीवाजोंवरीबाळपाहूनीदेइवेतना ॥ षष्ठांशवाचतुर्थांशदेइवेतनपाहुनी ॥ ६ ॥

दद्यात्तदर्धंभृत्यायद्वित्रिवर्षैरखिलंतुवा
वाक्पारुष्यान्न्यूनभृत्यास्वामीप्रबलदंडतः ॥ ७॥

अर्धवेतनवापूर्णदेदोनींतीनवत्सरीं ॥ कटुवाक्येंउग्रदंडेंथोडक्यावेतनेंतसें ॥ ७ ॥

भृत्यंप्रशिक्षयेन्नित्यंशत्रुत्वंत्वपमानतः
भृतिदानेनसंपुष्टामानेनपरिवर्धिताः ॥ ८ ॥

अपमानेंशत्रुहोतीयाभृत्यानित्याशीक्षिजे ॥ वेतनानेंपुष्टसदामानानेंमानिजेसदा ॥ ८ ॥

सांत्विताम्मृदुवाचायेनत्यजंत्याधिपंहिते
यथागुणान्स्वभृत्यांश्चप्रजाःसंरंजयेन्नृपः ॥ ९ ॥

मृदुवाक्येंशांताविलेंस्वामीतेंतेनटाकिती ॥ गुणीभृत्याप्रजेलागींभूपतीरंजवीसदा ॥ ९॥

शाखाप्रदानतःकांश्चिदपरान्फलदानतः
अन्यान्सुचक्षुषाहास्यैस्तथाकोमलयागिरा ।१०।

शाकदानेंहिकोणातेंफलेंकोणासहीतसें ॥ कोणासुदृष्टिनेंहास्येंतसेंकोमलवाणिनें । ११ ।

सुभोजनैःसुवसनैस्तांबूलैश्चधनैरपि
कांश्चित्सुकुशलप्रश्नैरधिकारप्रदानतः ॥ ११ ॥

सुभोजनेंसुवस्त्रानेंतांबूलेंहिधनेंतसें ॥ कोणाकुशलप्रश्नानेंकोणातेंअधिकारही ॥ ११ ॥

वाहनानांप्रदानेनयोग्याभरणदानतः
छत्रातपत्रचमरदीपिकानांप्रदानतः ॥१२ ॥

कोणासवाहनेंतेवीदेऊनीभूषणातसें ॥छत्रेंतेवीचवारिनेंकोणालागींमशालही ॥ १२॥

क्षमयाप्रणिपातेनमानेनाभिगमेनच
सत्कारेणचज्ञानेनह्यादरेणशमेनच ॥ १३ ॥

क्षमानमस्कारमानसामोरेंजाउनीतसें ॥ सत्कारानेंहिज्ञानानेंआदरेंशांतिनेंतसें ॥ १३ ॥

प्रेम्णासमीपवासेनस्वार्धासनप्रदानतः
संपूर्णासनदानेनस्तुत्योपकारकीर्तनात् ॥ १४ ॥

प्रेमेंसमीपवासेंवाकोणाअर्धासनींतसें ॥ पूर्णासनेंस्तुतीनेंवाउपकारवदूनियां ॥ १४ ॥

यत्कार्यैविनियुक्तायेकार्यांकैरंकयेच्चतान्
लोहजैस्ताम्रजैरित्तिभवैरजतसंभवैः ॥ १५ ॥
राजाकार्यींजोंनियुक्तत्याचिन्हेंचिन्हिजेतया लोहताम्रींपितळिवाचप्राशीचांदिचातशा १५

सौवर्णरत्नजैर्वापियथायोग्यैःस्वलांछनैः
प्रविज्ञानायदूरात्तुवस्त्रैश्चमुकुटैरपि ॥ १६ ॥
सोन्याच्यारत्नजडितयथायोग्यस्वलांछनें ॥ दुरूनिजाणिजेजैसेंवस्त्रेंवामुकुटेंतसें ॥ १६ ॥

वाद्यवाहनभेदैश्चभृत्यान्कुर्यात्पृथक्पृथक्
स्वविशिष्टंचयच्चिन्हानदद्यात्कस्यचिंनृपः ॥ १७ ॥
वाद्येंवाहनभेदेंवासेवकांकारिवेगळे ॥ विशेषजेंस्वीयचिन्हकोणालाहीनदेइतें ॥ १७ ॥

दशप्रोक्तापुरोधाद्याब्राह्मणाःसर्वएवते
अभावेक्षत्रियायोज्यास्तदभावेतथोरुजाः ॥ १८ ॥
दशोक्तजेउपाध्यादिअसावेसर्वब्राह्मण ॥ अभावींक्षात्रियायोजीनतरीवेश्यतेमग ॥ १८ ॥

नैवशूद्रास्तुसंयोज्यागुणवंतोपिपार्थिवैः
भागग्राहीक्षत्रियस्तुसाहसाधिपतिश्चसः ॥ १९ ॥
नयोजिजेशूद्रकधींभूपानेंगुणवानही ॥ वसूलींक्षात्रियाकामफौजदारीतशीतशा ॥ १९ ॥

ग्रामपोब्राह्मणोयोज्यःकायस्थोलेखकस्तथा
शुल्कग्राहीतुवैश्योहिप्रतिहारश्चपादजः ॥ २० ॥
ग्रामाधीशकरीविप्राकायस्थालेखकाकरी ॥ महसूलावरींवैश्यकारिजेशूद्रजासुद ॥ २० ॥

सेनाधिपःक्षत्रियस्तुब्राह्मणस्तदभावतः
नवैश्योनचवैशूद्रःकातरश्चकदाचन ॥ २१ ॥
सेनापतीक्षात्रियतोतदभावींद्विजाकरी ॥ नवैश्यातेंनशूद्रातेंभिणाऱ्यानकधींतसें ॥२१ ॥

सेनापतिःशूरएवयोज्यःसर्वासुजातिषु
ससंकरचतुर्वर्णधर्मेयंनैवयावनः ॥ २२ ॥
सेनापतीकरीशूरावाअसेकोणजातिचा ॥ ससंकराचारिवर्णाधर्महायवनानसे ॥ २२ ॥

यस्यवर्णस्ययोराजासवर्णःसुखमेधते
नोपकृतंमन्यतेस्मनतुष्यतिसुसेवनैः ॥२३॥

जावर्णाचाहोयराजातोवर्णसुखपावतो ॥ नमानीउपकारातेंनतोषिसाधुसेवनें ॥ २३ ॥

कथांतरेनस्मरतिशंकतेप्रलषत्यपि
क्षुब्धस्तनोतिमर्माणितंनृपंभृतकस्त्यजेत् ॥२४॥

गोष्टींतहीस्मरेनाजोशंकुनभिलतेंवदे ॥ कोपूनिकाढीमर्मातेंनृपात्याटाकिसेवक ॥ २४ ॥

लक्षणंयुवराजादेःकृत्यमुक्तंसमासतः
इतिशुक्रनीतौयुवराजाद्वितियोध्यायः ॥ २५ ॥

लक्षणायुवराजादिसंक्षेपेंकृत्यबोलिलें ॥ वासुदेवात्मजानेंयासमश्लोकींतनीतिच्या॥ २५ ॥

---

श्री

# शुक्रनीति

(प्राकृतसमश्लोकीसह)

## अध्याय ३ रा.

अथसाधारणंनीतिशास्त्रंसर्वेषुचोच्यते
सुखार्था:सर्वभूतानांमता:सर्वा:प्रवृत्तय: ॥ १ ॥

आतांसर्वांससामान्यनीतिशास्त्रांससांगिजे ॥ सुखार्थसर्वभूतांच्याप्रवृत्तीसर्वहीमत ॥ १॥

सुखंचनाविनाधर्मात्तस्माद्धर्मपरोभवेत्
त्रिवर्गशून्यंनारंभंभजेत्तंचाविरोधयन् ॥ २ ॥

सुखनाहींविनाधर्मोह्मणोनीरतिजेतयीं ॥ धर्मार्थकामासहितआरंभाकरिनान्यथ ॥ २॥

अनुयायात्प्रतिपदंसर्वधर्मेषुमध्यम:
नीचरोमनखस्मश्रुर्निर्मलांघ्रिर्मलायन: ॥ ३॥

आचरावेप्रतिपदींसर्वहीधर्ममध्यम ॥ स्मश्रूनखेंतींलाहानइंद्रियेंपायानेर्मल ॥ ३॥

स्नानशील:सुसुरभि:सुवेषोनुल्वणोज्वल:
धारयेत्सततंरत्नसिद्धमंत्रमहौषधी: ॥ ४॥

स्नानेंशुद्धसुगंधाढ्यसुवेषेंनम्रउज्वल ॥ सदैवधरिजेरत्नसिद्धमंत्रमहौषधी ॥ ४ ॥

सातपत्रपदत्राणोविचरेद्युगमात्रदृक्
निशिचात्ययिकेकार्येदंडीमौलीसहायवान् ॥ ५॥

छत्रजोड्यासहफिरेपाहूनीचारहातभू ॥ रात्रींअवश्यकामानींपागोटेंदंडसोबतीं ॥ ५॥

नवेगितोन्यकार्यीस्यान्नवेगान्नीरयेद्बलात्
भक्त्याकल्याणमित्राणिसेवेतेतरदूरग: ॥ ६॥

मलवेगीनान्यकाममळावेगेंनदाकिजे ॥ भक्तीनेंमित्रकल्याणसेविदूर दुजाहुनी ॥ ६॥

हिंसास्तेयान्यथाकामंपैशून्यंपरुषानृतं
संभिन्नालापव्यापादमभिध्याहग्विपर्ययं ॥७॥

हिंसाचोरीदुष्टकामखोटेंपैशून्यहीखरें ॥ पदेंव्यर्थद्रोहचिंताअन्येछाअक्षफेरणे ॥७॥

पापकर्मेतिदशधाकायवाङ्मानसैस्त्यजेत्
अवृत्तिव्याधिशोकार्ताननुवर्तेतशक्तितः ॥ ८॥

पापकर्मेयादाहांतेंकायावाचामनेंत्यजी ॥ सोयनाहींरोगशोकेंआर्तामदतशक्तिनें ॥ ८ ॥

आत्मवत्सततंपश्येदपिकीटपिपीलिकं
उपकारप्रधानस्यदपकारपरेप्यरौ ॥ ९ ॥

निजासमसदापाहीआव्रत्मस्छावरादिकां ॥ उपकारकरीशत्रुअपकारकरीजरी ॥ ९ ॥

संपद्विपत्स्वेकमनाहेतावीर्षेत्फलेन तु
कालेहितंमितंब्रूयादविसंवादिपेशलं ॥ १० ॥

विपत्संपत्कालिंसमईर्षाबिजिनिंतींफलीं ॥ कालींहितवदेथोडेंजेंअवंचकसुंदर ॥ १० ॥

पूर्वाभिभाषीसुमुखःसुशीलःकरुणामृदुः
नैकःसुखीनसर्वत्रविस्त्रब्धोनचशंकितः ॥ ११ ॥

पुर्वींवदावेंसुमुखसुशीलकरुणामृदु ॥ नएकसुखिसर्वत्राविश्वासितनशंकित ॥ ११ ॥

नःकंचिदात्मनःशत्रुंनात्मानंकस्यचिद्रिपुं
प्रकाशयेन्नापमानंनचनिस्नेहतांप्रभोः ॥ १२ ॥

नकोणीआपलाशत्रुकोणाचाहीनआपण ॥ प्रगटावेंनापमानाप्रभुक्रोधासहीतसें ॥ १२ ॥

जनस्याशयमालक्ष्ययोयथापरितुष्यति
तंतथैवानुवर्तेतपराराधनपंडितः ॥ १३ ॥

लोकाशयासजाणूनिजोजसापारितोषतो तसेंतयाशींवागावेंपराराधनिंपंडितें ॥ १३ ॥

नपीडयेदिंद्रियाणिनचैतान्यतिलालयेत्
इंद्रियाणिप्रमाथीनिहरंतिप्रसभंमनः ॥ १४ ॥

नपीडावेंइंद्रियांतेंनकरीबहुलालन ॥ इंद्रियेंदुर्धरबहुमनातेंओढितीबळें ॥ १४ ॥

एणोगजःपतंगश्चभृंगोमीनस्तुपंचमः
शब्दस्पर्शरूपरसगंधैरेतेहताःखलु ॥ १५ ॥

पतंगमृगमातंगभृंगमीनहीपंचम ॥ शब्देंस्पर्शेंरूपरसींगंधेंहेनाशपावले ॥ १५ ॥

एषुस्पर्शोवरस्त्रीणांस्वांतहारीमुनेरपि
अतोप्रमत्तःसेवेतविषयांस्तुयथोचितान् ॥ १६ ॥

श्रेष्ठस्त्रीचास्पर्शयांतमुनीच्याहीमनाहरी ॥ यासावधपणेंसेवीविषयांजेवियोग्यतें ॥ १६ ॥

मात्रास्वस्त्रादुहित्रावानात्यंतैकांतिकंवसेत्
यथासंबंधमाहूयादाभाष्याश्वास्यवैस्त्रियां ॥ १७ ॥

आईबहीणकन्येशींअतिएकांतिंनावसे ॥ बोलावाजेविसंबंधबोलेआश्वासहीस्त्रियां ॥ १७ ॥

स्वीयांतुपरकीयांवासुभगेभगिनीतिच
सहवासोन्यपुरुषैःप्रकाशमपिभाषणं ॥ १८ ॥

आपल्यादुसऱ्याच्यावासुभगेंभगिनीअसें ॥ सहवासनहीअन्यपुरुषींस्पष्टभाषण ॥ १८ ॥

स्वातंत्र्यंनक्षणमपिह्यवासोन्यगृहेतथा
भर्त्रापित्राथवाराज्ञापुत्रश्वशुरबांधवैः ॥ १९ ॥

स्वतंत्रतानक्षणहीराहणेंदुसऱ्याघरीं ॥ बंधुनेंपितरेंभर्त्यापेंसासऱ्यानेंहिबांधवीं ॥ १९ ॥

स्त्रीणांनैवतुदेयंस्याद्गृहकृत्यैर्विनाक्षणः
चंडंषंढंदंडशीलमकामंसुप्रवासिनं ॥ २० ॥

स्त्रियांतनकदाद्यावाघरकामाविनाक्षण ॥ कोपिष्टमारकाषंढप्रवासीवाविरक्तही ॥ २० ॥

सुदरिद्रंरोगिणंचह्यन्यस्त्रीनिरतंसदा
पतिंदृष्ट्वाविरक्तास्यान्नारीवान्यंसमाश्रयेत् ॥ २१ ॥

दरिद्रीबहुवारोगीपरस्त्रीरतहीसदा ॥ पतीजरीहोविरक्तवाअन्याश्रयतीकरी ॥ २१ ॥

त्यक्त्वैतान्दुर्गुणान्यत्नात्ततोरक्ष्यास्त्रियोनरैः
वस्त्रान्नभूषणप्रेममृदुवाग्भिश्चशक्तितः ॥ २२ ॥

टाकूनिदुर्गुणातेंयायत्नेंस्त्रीरक्षिजेनरें ॥ वस्त्रान्नभूषणेंप्रेमेंगोडवाचेंस्वशक्तिनें ॥ २२ ॥

स्वात्यंतसंन्निकर्षेणस्त्रियंपुत्रंचरक्षयेत्
चैत्यपूज्यध्वजाशस्तछायाभस्मतुषाशुचीन्॥ २३॥

बहुठऊ।निनिकटींस्त्रीपुत्रालागिरक्षिजे॥चौत्र्यांपूज्यांध्वजांस्वछछायेभस्मांअमंगलां ॥२३॥

नाक्रामेच्छर्करालोष्ठबालिस्नानभुवोपिच
नदींतरेन्नबाहुभ्यांनाग्निस्कन्नमभिव्रजेत् ॥२४॥

आक्रमीनखडेअल्पपूजास्नानस्छलासही ॥ नदींतनतिरेहातेंविस्तृताग्निवरीनजा॥२४॥

संदिग्धनावंवृक्षंचनारोहेदुष्टयानवत्
नासिकांनविकृष्णीयान्नाकस्माद्विलिखेद्भुवं॥२५॥

दुर्नावेवृक्षावरतींनचेढदुष्टयानसें ॥ नाकानकोरीसहसाभूतेंओरखडेकरी ॥ २५॥

नृसंहताभ्यांपाणिभ्यांकंडूयेदात्मनःशिरः
नांगैश्चेष्टेतविगुणंनाशितोत्कटुकंचिरं ॥ २६॥

एकदांदोनिहातांनींमस्तकातेंनखाजवी ॥ अंगानवांकडेंमोडीनखाईतिखटाबहु ॥२६॥

देहवाक्चेतसांचेष्टाःप्राक्श्रमाद्विनिवर्तयेत्
नोर्ध्वजानुश्चिरंतिष्ठेन्नक्तंसेवतनद्रुमं ॥ २७॥

कायावाचाचित्तचेष्टाश्रमापूर्वींचसोडिजे ॥ गुडघेउंचनबसेरात्रींवृक्षावरींतसें॥ २७॥

तथाचत्वरचैत्यांतचतुष्पथसुरालयान्
शून्याटवीशून्यगृहस्मशानानिदिवापिन ॥ २८ ॥

चवाठांअगणींशून्यींचौत्रींदेवालयींतसें॥ शून्यींरानींशून्यघरींस्मशानींदिवसाहिन॥२८॥

सर्वथेक्षेतनादित्यंनभारांशिरसावहेत्
नेक्षेतप्रततंसूक्ष्मंदीप्तामेध्याप्रियाणिच ॥ २९ ॥

नसूर्यासर्वदापाहीनभारावाहिजेशिरीं ॥ नपाहींबहुबारीकजेंजेंवाईटअप्रिय ॥ २९॥

संध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिंतनं
मद्यविक्रयसंधानदानादानाविनाचरेत् ॥३०॥

संध्याभोजनशय्यास्त्रीपढणेंतेविचिंतणी ॥ मद्यविक्रयवाकणेंदानघेणेंनतेंकरी ॥ ३०॥

आचार्यःसर्वचेष्टासुलोकएवहिधीमतः
अनुकुर्यात्तमेवातोलौकिकार्थेपरीक्षकः ॥ ३१ ॥
गुरुहाव्यवहारासबुद्धिवानासलोकहा ॥ तयासअनुवर्तावेंलौकिककार्थपरीक्षकें ॥ ३१ ॥

राजदेशकुलज्ञातिसद्धर्मान्नैवदूषयेत्
शक्तोपिलौकिकाचारंमनसापिनलंघयेत् ॥ ३२ ॥
राजदेशकुलज्ञातिसद्धर्मातेंनदोषदे ॥ शक्तहीलौकिकाचारामनानींहीनलंघिजे ॥ ३२ ॥

अयुक्तंयत्कृतंचोक्तंनबलाद्धेतुनोद्धरेत्
दुर्गुणस्यचवक्तारःप्रत्यक्षंविरलाजनाः ॥ ३३ ॥
अयोग्यजेंकरीबोलेनत्याहेतुबळाकरी ॥ दुर्गुणाचेबोलणारेप्रत्यक्षाविरळाजन ॥ ३३ ॥

लोकतःशास्त्रतोज्ञात्वाह्यतस्त्याज्यान्स्त्यजेत्सुधीः
अनयंनयसंकाशंमनसापिनाचिंतयेत् ॥ ३४ ॥
जाणूनिलोकशास्त्रानेंटाकींत्याज्यासबुद्धिमान्॥अनयातेंनयसमामनानेंहींनमानिजे ॥ ३४ ॥

अहंसहस्रापराधीकिमेकेनभवेन्मम
मत्वानाघंस्मरेदोषद्बिंदुनापूर्यतेघटः ॥ ३५ ॥
मीतोसहस्रापराधीएकानेंकायहोयतें ॥ जाणूनिनकरीपापाथेंबानेंभरतोघट ॥ ३५ ॥

नक्तंदिनानिमेयांतिकथंभूतस्यसंप्रति
दुःखभाग्नभवत्येवंनित्यंसान्निहितस्मृतिः ॥ ३६ ॥
दिनरात्रीलोटतीलकोणत्यारीतिनेंमम ॥ ऐसानदुःखवान्होतोनित्यठेवीजरीस्मृति ॥ ३६ ॥

समासव्यूहहेत्वादिकृतेच्छार्थंविहायच
स्तुत्यर्थवादान्संत्यज्यसारंसंगृह्ययत्नतः ॥ ३७ ॥
तर्कैसमासेंहेतूनेंस्वछंदार्थासटाकुनी ॥ टाकीस्तुतीअर्थवादायत्नेंसारांसघेउनी ॥ ३७ ॥

धर्मतत्वंहिगहनमतःसत्सेवितंनरः
श्रुतिस्मृतिपुराणानांकर्मकुर्याद्विचक्षणः ॥ ३८ ॥
धर्माचेंबीजगहनयाजयाथोरसेविती ॥ श्रुतिस्मृतिपुराणाच्याकर्माकारिविचक्षण ॥ ३८ ॥

नगोपयेद्वासयेच्चराजामित्रंसुतंगुरुं
अधर्मनिरतंस्तेनमाततायिनमप्युत: ॥ ३९ ॥

ठेवीनलपवीराजशत्रूतेंगुरुतेंसुता ॥ अधर्मनिरताचोराआततायिनरातसें ॥ ३९ ॥

अग्निदोगरदश्चैवशस्त्रोन्मत्तोधनापहः
क्षेत्रदारहरश्चैतान्षड्विद्यादाततायिनः ॥ ४० ॥

आगलावाविषादेताशस्त्रेंमत्तधनाहर ॥ भूस्त्रीहरणकर्तेंहेआततायीसहानर ॥ ४० ॥

नोपेक्षेतस्त्रियंबालंरोगंदासंपशुंधनं
विद्याभ्यासंक्षणमपिसत्सेवांबुद्धिमान्नरः ॥ ४१ ॥

नउपेक्षीस्त्रीसबालारोगादासाधनापशु ॥ विद्याभ्यासानक्षणहीधीमान्सत्सेवनानर ॥ ४१ ॥

विरुद्धोयत्रनृपतिर्धनिकःश्रोत्रियोभिषक्
आचारश्चतथादेशोनतत्रदिवसंवसेत् ॥ ४२ ॥

विपरीताजिथेंभूपधनीश्रोत्रियवैद्यही ॥ आचारहीतसादेशनेईनदिवसातिथें ॥ ४२ ॥

नपुंसकश्चस्त्रीबालश्चंडोमूर्खश्चसाहसी
यत्राधिकारिणश्चैतेनतत्रदिवसंवसेत् ॥ ४३ ॥

षंढवास्त्रीतसाबालकोपीमूर्खाहिसाहसी ॥ अधिकारीहेचाजिथेनेईनदिवसातिथे ॥ ४३ ॥

अविवेकीयत्रराजासभ्यायत्रतुपाक्षिकाः
सन्मार्गोज्झितविद्वांसःसाक्षिणोनृतवादिनः ॥ ४४ ॥

अविवेकीजिथेराजापक्षपातीसभासद ॥ त्यक्तसन्मार्गविद्वानसाक्षीअनृतबोलते ॥ ४४ ॥

दुरात्मनांचप्राबल्यंस्त्रीणांनीचजनस्यच
यत्रनेच्छेद्धनंमानंवसतिंतत्रजीवितं ॥ ४५ ॥

जेथेंदुष्टाप्रबलतास्त्रीतेंनीचजनातशी ॥ तेथेंनेच्छीधनामानावसतीवांचण्यासही ॥ ४५ ॥

मातानपालयेद्बाल्येपितासाधुनशिक्षयेत्
राजायदिहरेद्वित्तंकातत्रपरिवेदना ॥ ४६ ॥

मातानर[illegible]यतो ॥ ४६ ॥

सुसेविताःप्रकुप्यंतिमित्रस्वजनपार्थिवाः
गृहमग्न्यशनिहतंकातत्रपरिदेवना ॥४७॥

कोपयेतोसेवितांहीमित्रांस्वजनपार्थिवां ॥ सांगेपडेपडेवीजतयाचाखेदकायतो । ४७ ।

आप्तवाक्यमनादृत्यदर्पेणाचरितंयदि
फलितंविपरीतंतस्कातत्रपरिदेवना ॥ ४८ ॥

आप्तवाक्यानमानूनीगर्वेंभलतेंकरीजरी ॥ वैपरीत्येंजीरफळेतयाचाखेदकायतो ॥ ४८ ॥

सावधानमनानित्यंराजानंदेवतांगुरुं
अग्नितपस्विनंधर्मज्ञानवृद्धंसुसेवयेत् ॥ ४९ ॥

सावधानमनोंनित्यभूपादेवागुरूसही ॥ अग्नीतपस्वीधर्मातेंज्ञानवृध्दासुसेविजे ॥ ४९ ॥

मातृपितृगुरुस्वामीभ्रातृपुत्रसखिष्वपि
नविरुद्धेन्नापकुर्यान्मनसापिक्षणंक्वचित् ॥५०॥

मातापितागुरुस्वामीभाउंपुत्रसखीजनी ॥ नविरोधानापमानाकरीचित्तेक्षणीकधीं ।५०।

स्वजनैर्नविरुध्येतनस्पर्धेतबलीयसा
नकुर्यात्स्त्रीबालवृद्धमुर्खेषुचविवादनं ॥५१॥

स्वजनींनविरोधातेंकरीस्पर्धाबलीयसी ॥ नकरीस्त्रीबालवृद्धमुर्खांशींहिविवादन ॥ ५१ ॥

एकस्वादुनभुंजीतएकअर्थान्नचिंतयेत्
एकोनगछेदध्वानंनैकःसुप्तेषुजागृयात् ॥ ५२ ॥

नगोडएकटाखायीएकमस्लतहीतशी ॥ मार्गेनजाएकजागेसर्वहीनिजतांजन ॥ ५२ ॥

नान्यधर्मंहिसेवेतनद्रुह्यान्नैकदाचन
हीनकर्मगुणैःस्त्रीभिर्नासीतैकासनेक्वचित् ।५३।

परधर्मानसेवावेंद्रोहहीनकरीतसा ॥ नीचकर्मगुणींस्त्रीशींएकासनिंबसोंनये ॥ ५३ ॥

षट्दोषापुरुषेणेहहातव्याभूतिमिछता
निद्रातंद्राभयंक्रोधआलस्यंदीर्घसूत्रता ॥ ५४ ॥

इयेषट्दोषटाकावेपुरुषेंउदयेछुनें ॥ निद्रातंद्राभयक्रोधआलस्यदीर्घसूत्रता ॥ ५४ ॥

प्रभवंतिविघातायकार्यस्यैतेनसंशयः
उपायज्ञश्चयोगज्ञस्तत्वज्ञःप्रतिभानवान् । ५५ ।

होतातिहेविघाताल।कार्यानिःसंशयेंसदा ॥ उपाययोगतत्वांतेंजाणेजाप्रतिभानही । ५५।

स्वधर्मानिरतोनित्यंपरस्त्रीषुपराङ्मुख
वस्तोहवान्चित्रकथःस्यादकुंठितवाक्सदा । ५६।

स्वधर्मींनित्यनिरतपरस्त्रीशींविरक्तजो ॥ वक्तातर्कीकथाचित्रजाणेवाणीअकुंठित ॥ ५६ ॥

चिरंसंश्रृणुयान्नित्यंजानियात्क्षिप्रमेवच
विज्ञायप्रभजेदर्थान्नकामंप्रभजेत्क्वचित् ॥ ५७ ॥

ऐकेस दासावकाशत्वरेंनेंसमजेतसें ॥ जाणूनीभिदिजेअर्थीअतिसेवीनतोकधीं ॥ ५७ ॥

क्रयविक्रयस्यातिलिप्सांस्वदैन्यंदर्शयेन्नहि
कार्यंविनान्यगेहेननाशातःप्रविशेदपि ॥ ५८ ॥

व्यवहारींबहूइच्छानिजदैन्यानदाखवी ॥ कार्याविनाअन्यगेहींआशेनेंनचजाइजे ॥ ५८ ॥

अपृष्ठोनैवकथयेद्गृहकृत्यंतुकंप्रति
बह्वर्थाल्पाक्षरंकुयात्सल्लापंकार्यसाधकं ॥ ५९ ॥

नसांगेपुसल्यावीणकार्यस्वीयघरांतलें ॥ बव्हर्थआक्षरेंथोडींबोलिजेकार्यसाधक ॥ ५९ ॥

नदर्शयेत्स्वाभिमतमनुभूताद्विनासदा
ज्ञात्वापरमतंसम्यक्तेनाज्ञातोत्तरंवदेत् ॥ ६० ॥

नदाखवावेंस्वमताविनाअनुभवाकधीं ॥ जाणेंपरमताऱ्याचेंइच्छेनेंदेइउतर ॥ ६० ॥

दंपत्योःकलहेसाक्ष्यंनकुर्यात्पितृपुत्रयोः
सुगुप्तःकृत्यमंत्रस्यान्नत्यजेच्छरणागतं ॥ ६१ ॥

दंपतींकलहींसाक्षिनदेईतातपुत्रिंहीं ॥ करीमस्लतिलागुप्तनत्यजीशरणागता ॥ ६१ ॥

यथाशक्तिचिकीर्षेत्तुकुर्यन्मुह्येच्चनापदि
कस्याचिन्नस्पृशेन्मर्ममिथ्यावादंनकस्यचित् ॥ ६२ ॥

जशीशाक्तितशी[illegible]करीमोहेनसंकटीं ॥ नकाढीमर्मकोणाचेंखोटावादनतोकरी ॥ ६२ ॥

नाश्लीलंकीर्तयेत्कांचित्प्रलापंनचकारयेत्
अस्वर्ग्यंस्याद्धर्म्यमपिलोकविद्विष्टंतुयत् ॥ ६३ ॥

अयोग्यनवदेकांहींअनर्थातेंविकारक ॥ स्वर्गानदेधर्मजरीलोकविद्विषितजया ॥ ६३ ॥

स्वहेतुभिर्नहन्येतकस्यवाक्यंकदाचन
प्रविचार्योत्तरंदेयंसहसानवदेत्क्वचित् ॥ ६४ ॥

स्वहेतुनेंनमोडावेंकोणाचेंवाक्यतेंकधीं ॥ विचारोनीउत्तरदेसहसानवदेकधीं ॥ ६४ ॥

शत्रोरपिगुणाग्राह्यागुरोस्त्याज्यास्तुदुर्गुणाः
उत्कर्षोनैवनित्यंस्यान्नापकर्षस्तथैवच ॥ ६५ ॥

शत्रूच्याहीगुणाघ्यावेंदुर्गुणागुरूच्यात्यजी ॥ उत्कर्षहीनित्यनाहींअपकर्षहितेंवितो ॥ ६५ ॥

प्राक्कर्मवशतोनित्यंसधनोनिर्धनोभवेत्
तस्मात्सर्वेषुलोकेषुमैत्रीनैवचहापयेत् ॥ ६६ ॥

प्रारब्धानेंनित्यहोतोधनीनिर्धनहीतसा ॥ ह्मणोनीसर्वलोकांशींमैत्रीतेंनत्यजकिवीं ॥ ६६ ॥

दीर्घदर्शीसदाचस्यात्प्रत्युत्पन्नमतिःक्वचित्
साहसीसालसीचैवाचिरकारीभवेन्नहि ॥ ६७ ॥

दिर्घदर्शीसदाव्हावेंतात्कालीकमतीकधीं ॥ साहसीआळसीतेवनिकधींदीर्घसूत्रही ॥ ६७ ॥

यःसुदुर्निष्फलंकर्मज्ञात्वाकर्तुंव्यवस्यति
द्रागादौदीर्घदर्शीस्यात्सचिरंसुखमश्नुते ॥ ६८ ॥

जाणूनिनिष्फलाकर्माकरायाजोप्रवर्ततो ॥ पूर्वींजोदूरपाहतोतोसदासुखपावतो ॥ ६८ ॥

प्रत्युत्पन्नमतिःप्राप्तांक्रियांकर्तुंव्यवस्यति
सिद्धिःसांशयिकीतत्रचापल्यात्कार्यगौरवात् ॥ ६९ ॥

तत्कालजोप्राप्तमतिकरण्याकार्यउद्यत ॥ तयाचीसंशयेंसिद्धीचापल्यैंकार्यगौरवें ॥ ६९ ॥

यततेनैवकालेपिक्रियांकर्तुंचसालसः
नसिद्धिस्तस्यकुत्रापिसनश्यतिचसान्वयः ॥ ७० ॥

वेळींयत्नकरीनाजोकार्यालातोचिआळसी ॥ तयानसिद्धिकाधींहीसकुलेंनाशपावतो ॥ ७० ॥

क्रियाफलमविज्ञायययततेसाहसचिसः
दुःखभागीभवत्येवक्रियायांतत्फलेनवा ॥ ७१ ॥
क्रियाफलानजाणूनियततोतोचसाहसी ॥दुःखाभोगीक्रियाकालींफिलकालींतरीकधीं॥७१॥
महत्कालेनाल्पकर्माचिरकारीकरोतिच॥
सशोचत्यल्पफलतोदीर्घदर्शीभवेदतः ॥ ७२ ॥
बहुकालींकर्मथोडेंकरितोचिरकारितो ॥ शोकीहो तोअल्पफलेंयासाठींदीर्घदार्शीहो ॥७२॥
सुफलंतुभवेत्कर्मकदाचित्सहसाकृतं
निष्फलंवापिप्रभवेत्कदाचित्सुविचारितं ॥ ७३॥
होतेंसफलतेंकर्मकेलेंजेंसहसाकधीं ॥ कधींनिष्फलहीहोतेंसुविचारीतहीजरी ॥ ७३॥
तथापिनैवकुर्वीतसहसानर्थकारितत्
कदाचिदपिसंजातमकार्यादिष्टसाधनं ॥ ७४॥
तरीहिनकरीकार्यासहसानर्थहोतसे ॥ दुष्टकार्याहुनिजरीहोतसेइष्टसाधन ॥ ७४॥
यदनिष्टंतुयत्कार्यान्नाकार्यप्रेरकंहितत्
भृत्योभ्राताापिवापुत्रःपत्नीकुर्यान्नचैवयत् ॥७५॥
आनिष्टसत्कार्यंजरीअकार्यप्रेरितेनते ॥ भृत्यबंधूतसापुत्रपत्नीजेंकरिनातया ॥ ७५॥
विधास्यंतिचमित्राणितत्कार्यमविशंकितं
अतोयतेततत्प्राप्त्यैमित्रलाब्धिर्वरान्नृणां ॥७६॥
तयाकामासकारितीमित्रानिःशंकहोउनी ॥ ह्मणोनितल्लाभियत्नेंमित्रलाभअसेवर ॥ ७६॥
नात्यंतंविश्वसेत्कंचिद्विश्वस्तमपिसर्वदा
पुत्रंवाभ्रातरंभार्याममात्यमधिकारिणं ॥७७॥
नकरीबहुविश्वासविश्वासुकजरीअसे ॥ पुत्राभावासभार्येतेंप्रधानाअधिकारिते ॥ ७७॥
धनस्त्रीराज्यलोभोहिसर्वेषामधिकोयतः
प्रामाणिकंचानुभूतमाप्तंसर्वत्रविश्वसेत् ॥७८॥
लोभिस्त्रीधनराज्याचासर्वांअधिकतोअसे॥ खन्याअनुभवेंआप्ताविश्वासावेकुठेहिया ॥७८॥

विश्वसित्वात्मवद्गूढस्तत्कार्यैविमृशेत्स्वयं
तद्वाक्यंतर्कतोनर्थेविपरीतांनचिंतयेत् ॥ ७९॥

विश्वासुनीनिजसमत्याकार्यापाहिजेस्वयें ॥ तर्केंअनर्थातद्वाक्याविपरीतानचिंतिजे ॥७९॥

चतुःषष्टितमांशंतन्नाशितंक्षमयेदथ
स्वधर्मनीतिबलवान्तेनमैत्रींप्रधारयेत् ॥ ८० ॥

चौसष्टावाअंशजर्रानाशितांसेवकेंक्षमी ॥ धर्मनीतिबळेंयुक्ततयाशींमित्रताकरी ॥ ८० ॥

दानैर्मानैश्चसत्कारैःसुपूज्यान्पूजयेत्सदा
कदापिनोग्रदंडस्यात्कटुभाषणतत्परः ॥ ८१ ॥

सत्कारेंदानमानानेंपूजींपूज्यासर्सवदा ॥ कधींनहोउग्रदंडकटुभाषणसक्तही ॥ ८१ ॥

भार्यापुत्रोप्युद्विजतेकटुवाक्यात्प्रदंडतः
पशवोपिवशंयांतिदानैश्चमृदुभाषणैः ॥ ८२ ॥

उद्विग्नहोस्त्रीसुतहीप्रचंडेंकटुभाषणें ॥ पशूहिवशहोतातदानानेंमृदुभाषणें ॥ ८२ ॥

नविद्ययानशौर्येणधनेनाभिजनेनच
नबलेनप्रमत्तस्यान्नातिमानीकदाचन ॥ ८३ ॥

नविद्येनेंनशौर्यानेंधनानेंनकुलेंतसें ॥ नबलानेंहोयमत्तअतिमानीतसेंकधीं ॥ ८४ ॥

नाप्तोपदेशंसंवेत्तिविद्यामत्तस्वहेतुभिः
अनर्थमप्यभिप्रेतंमन्यतेपरमार्थवत् ॥ ८४ ॥

नजाणेआप्तवचनविद्यामत्तस्वहेतुनीं ॥ अनर्थदाहीस्वमतामानितोपरमार्थसे ॥ ८४ ॥

शौर्यमत्तस्तुसहसायुद्धंकृत्वाजहात्यसून्
व्युहादियुद्धकौशल्यंतिरस्कृत्यचशात्रवान् ॥८५॥

शूरत्वेंमत्तसहसायुद्धाकरिअसूत्यजी ॥ कवायतींयुद्धिदक्षशत्रूतेंअवमानुनी ॥ ८५ ॥

श्रीमत्तपुरुषोवेत्तिनदुष्कीर्तिमजोयथा
स्वमूत्रगंधंमूत्रेणमुखमासिंचतेस्वकं ॥ ८६ ॥

नजाणेमत्तजोश्रीनेंदुष्कीर्तीजीवबोकड ॥ स्वमूत्रगंधामूत्रानेंमुखातेंसिंचतोनिजा ॥ ८६ ॥

तथाभिजनमत्तस्तुसर्वानेवावमन्यते
श्रेष्ठानपीतरान्सम्यगकार्येकुरुतेमतिं ॥ ८७ ॥

कुलाभिमानेंजोमत्तसर्वांतेंअवमानितो ॥ श्रेष्ठांतेंइतरांतेंवीअकार्यीकारितोमती ॥८७॥

बलमत्तस्तुसहसायुद्धेविदधतेमनः
बलेनबाधतेसर्वानश्वादीनपिह्यन्यथा ॥ ८८ ॥

बलेंजोमत्तसहसायुद्धींधरितसेमना ॥ बळानेंपीडितोसर्वांअश्वादीतेंहितोवृथा ॥ ८८ ॥

मानमत्तोमन्यतेस्मतृणवच्चाखिलंजगत्
अनर्होपिचसर्वेभ्यस्त्वत्यर्घासनमिछति ॥ ८९ ।

मानानेंभत्ततोमानीसर्वातृणसमाजगा ॥ अयोग्यसर्वांहुनिजोउच्चआसनइछितो । ८९॥

मदाएतेवलिप्तानांसतामेतेदमास्मृताः
विद्यायाश्चफलंज्ञानंविनयश्चफलंश्रियः ॥ ९० ॥

मदहेदुर्जनालागींसाधूलामतहेदम ॥ विद्येचेंज्ञानफलहोश्रीचेंविनयहेंकल ॥ ९० ॥

यज्ञदानेबलफलंसद्रक्षणमुदाहृतं
नामिताःशत्रवःशौर्यफलंचकरदीकृताः ॥ ९१ ॥

बळाफळेंयज्ञदानेंसाधूरक्षणहीतसें ॥ नमीवणेंशत्रुशौर्याकरघेणेंतसेंफळ ॥ ९१ ॥

शमोदमश्चार्जवंचाभिजनस्यफलंत्विदं
मानस्यतुफलंचेतत्सर्वेस्वसदृशाइति ॥ ९२ ॥

सुकुलाचेंशमदमतसेंआर्जवहेंफळ ॥ मानाचेंहेंफळअसेसर्वहीआपलेसम ॥ ९२ ॥

सुविद्यामंत्रभैषज्यस्त्रीरत्नंदुष्कुलादपि
गृहीयात्सुप्रयत्नेनमानमुत्सृज्यसाधकः ॥ ९३ ॥

औषधीमंत्रविद्यास्त्रीदुष्कुलाहुनिहीमणी ॥ घ्यावेसुयत्नाकरुनीमानासोडूनिसाधकें ।९३ ।

उपेक्षेतप्रनष्टंयत्प्राप्तंयत्तदुपाहरेत्
नबालंनस्त्रियंचातिलालयेत्ताडयेन्नच ॥ ९४ ॥

जेंनष्टयाउपेक्षावेंत्वरेंप्राप्तासघेइजे ॥ अत्यंतनस्त्रीसबाळालाडिवाताडिवातसें ॥ ९४॥

विद्याभ्यासेगृह्यकृत्येतावुभौयोजयेत्क्रमात्
परद्रव्यंक्षुद्रमपिनादत्तंसहरेदणु ॥ ९५ ॥
विद्याभ्यासींगृह्यकर्मींयादोघांयोजिजेतसें ॥ परद्रव्यासअल्पाहीनदेतांनहरीकधीं ॥९५॥

नोच्चारयेदघंकस्यास्त्रियंनैवचदूषयेत्
नब्रूयादनृतंसाक्ष्यंकृतंसाक्ष्यंनलोपयेत् ॥ ९६ ॥
नवदेपापकोणाचेंकोणाचीस्त्रीनदोषिजे ॥ नद्यावींसाक्षितीखोटीखरीसाक्षनलोपवी ।९६।

प्राणात्ययेनृतंब्रूयात्सुमहत्कार्यसाधने
कन्यादात्रेतुह्यधनंदस्यवेसधनंनरं ॥ ९७ ॥
प्राणनाशींवदेखोटेंमोठेंवाकार्यसाधतां ॥ निर्धनाकन्यकादेत्याचोरातेंसधनानरा ॥९७ ॥

गुप्तंजिघांसवेनैवविज्ञातमपिदर्शयेत्
जायापत्योश्चपित्रोश्चभ्रात्रोश्चस्वामिभृत्ययोः।९८
लपल्यामारणारातेंनवदेजाणलेंजरी ॥ पितरांचास्त्रीपतिचाबंधुंचास्वामिसेवकीं ॥ ९८ ॥

भगिन्योर्मित्रयोर्भेदंनकुर्याद्गुरुशिष्ययोः
नमध्याद्गमनंभाषाशालिनोःस्थितयोरपि ।९९।
भगिनींचाहीमीत्राचानभेदगुरुशिष्यकीं ॥ नजावेंमधुनीकोणीबोलतांबसलेजरी ।९९।

सुहृदंभ्रातरंबंधुमुपचर्यात्सदात्मवत्
गृहागतंक्षुद्रमपियथार्हंपूजयेत्सदा ॥१०० ॥
सुहृदांबंधुवर्गातेंआपल्यापरिसेविजे ॥ घरींलाहानहीयेतांयथायोग्यपुजीतया ॥ १०० ॥

तदीयकुशलप्रश्नःशक्त्यादानैर्जलादिभिः
सपुत्रस्तुगृहेकन्यांसपुत्रांवासयेन्नहि ॥ १ ॥
तयांतेंकुशलप्रश्नशक्तीनेंदानपाणिनें ॥ सपुत्रनघरींठेवीसपुत्राकन्यकासदा ॥ १ ॥

सभर्तृकांचभगिनीमनाथेतेतुपालयेत्
सर्पोग्निर्दुर्जनोराजाजामाताभगिनीसुतः ॥२ ॥
भगिनीहीससौभाग्यात्याअनाथांसपाळिजे ॥ सर्पअग्नीदुष्टराजाजांवईभगिनीसुत ।२ ॥

रोगःशत्रुर्नावमान्योप्यल्पइत्युपचारतः
क्रौर्यात्तैक्ष्ण्यदुस्वभावात्स्वामित्वात्पुत्रिकाभयात् ३
रोगशत्रूनावमानीउपचारांनिंअल्पही ॥ क्रोयैंतैक्ष्ण्येंदुस्वभावेंस्वामित्वेंपुत्रिकाभयें ॥ ३ ॥
स्वपूर्वजपिंडदत्वावृद्धिभिस्याउपाचरेत्
ऋणशेषंरोगशेषंशत्रुशेषंनरक्षयेत् ॥ ४ ॥
सेवावेंपितृपिंडार्थवंशवृद्धिभयेंतसें ॥ कर्जाचेंशेषरोगाचेंशत्रुशेषनरक्षिजे ॥ ४ ॥
याचकाद्यैःप्रार्थितसन्नतीक्ष्णंचोत्तरंवदेत्
तत्कार्यंतुसमर्थश्चेत्कुर्याद्वाकारयीतच ॥ ५ ॥
याचकांनींमागिजेतांनवदावेंतयांकडू ॥ जरीशक्तकरीकार्याकरवीपरहस्तिवा ॥ ५ ॥
दातॄणांधार्मिकाणांचशूराणांकीर्तनंसदा
श्रुणुयात्तुप्रयत्नेनतच्छिद्रंनैवलक्षयेत् ॥ ६ ॥
दातेयांचीधार्मिकांचीशूरांचीकीर्तिवर्णिजे ॥ ऐकावीवाप्रयत्नानेंताछिद्रपाहणेंनतें ॥ ६ ॥
कालेहितमिताहारंविहारीविघसाशनः
अदीनात्माचसुस्वन्यःशुचिःस्यात्सर्वदानरः ।७।
कालींहितमिताहारद्विजवायज्ञशेषजें ॥ अदीनत्वेंसुखेंनिद्रापवित्रसर्वदानर ॥ ७
कुर्याद्विहारमाहारंनिर्हारंविजनेसदा
व्यवसायीसदाचस्यात्सुखंव्यायाममभ्यसेत् ।८।
करीविहारआहाराएकांतींमलनिर्गम ॥ उद्योगीहोइजेनित्यसुखदाकारिकसत ॥ ८ ॥
अन्नंनानिंद्यात्सुस्वच्छःस्वीकुर्यात्प्रीतिभोजनं
आहारंप्रवरंविंद्यात्षड्रसंमधुरोत्तरं ॥ ९ ॥
अन्नानिंदीस्वस्छत्वेंकारिजावेंहिभोजना ॥ आहारवरतोयुक्तषड्रसंमधुशेवटीं ॥ ९ ॥
विहारंचैवस्वस्त्रीभिर्वेश्याभिर्नकदाचन
नियुद्धंकुशलैःसार्धंव्यायामंनतिभिर्वरं ॥ १० ॥
विहाराआपल्यास्त्रीशींवेश्येशींनकधींचही ॥ कुस्तीतेंपेचवाल्याशींनमस्कारेंहिकसत ।१०।

हित्वाप्राक्पश्चिमौयामौनिशिश्वापोवरोमतः
दीनांधपंगुबाधिरानोपहास्याकदाचन ॥ ११ ॥

पूर्वप्रहरमागीलनिजावेंटाकुनीसदा ॥ दीनांधपंगुबहिरेउपहासूनयेकधीं ॥ ११ ॥

नाकार्येतुमतिंकुर्याद्द्राक्स्वकार्यंप्रसाधयेत्
उद्योगेनबलेनैवबुध्याधैर्येणसाहसात् ॥ १२ ॥

अकार्यींनधरीचित्तास्वकार्यासाधिजेत्वरें ॥ बळेंउद्योगबुद्धीनेंधैर्यानेंसाहसेंतसें ॥ १२ ॥

पराक्रमेणार्जवेनमानमुत्सृज्यसाधकः
नानिष्टंप्रवदेत्कस्मिन्नछिद्रंकस्यलक्षयेत् ॥ १३ ॥

पराक्रमेंआर्जवानेंमानासोडूनिसाधक ॥ अनिष्टनवदेकोणाकोणाचेंछिद्रपाहिना॥ १३ ॥

आज्ञाभंगस्तुमहातांराज्ञःकार्योनवैक्काचित्
असत्कार्यनियोक्तारंगुरुंवापिप्रबोधयेत् ॥१४ ॥

आज्ञाभंगमहानाचाराजाचानकरीकधीं ॥ असत्कार्यप्रेरकातेंगुरुतेंहीप्रबोधिजे॥ १४ ॥

नातिक्रामेदपिलघुंक्काचित्सत्कार्यबोधकं
कृत्वास्वतंत्रांतरुणींस्त्रियंगछेन्नवैक्काचित् ॥ १५॥

नावमानीलघूतेंहीसत्कार्यालागिंबोधका ॥ स्वतंत्रतरुणोस्त्रीतेंकरोनिनाचिजायेजे ॥१५॥

स्त्रियोमूलमनर्थस्यतरुण्यःकिंपरैःसह
नप्रमाद्येन्मदद्रव्यैर्नविमुह्येत्कुसंततौ ॥ १६ ॥

स्त्रियामूळअनर्थालातरुणीनकशामग ॥ मदद्रव्यैंनमादावेंकुसंतानीनमोहिंजे ॥ १६ ॥

साध्वीभार्यापितृपत्नीमाताबालःपितास्नुषा
अभर्तृकानपत्यायासाध्वीकन्याश्वसापिच ॥१७॥

साध्वीस्त्रीसूनजननीपिताबालपतीविना॥अपुत्रासाधुशीलाजीभागेनीकन्यकातशी ॥१७॥

मातुलानीभ्रातृभार्यापितृमातृस्वसातथा
मातामहोनपत्यश्चगुरुःश्वशुरमातुलाः ॥ १८ ॥

मामीतसीभावजयआतेतेंमावशीसही ॥ आईचाबापअसुतमामास्वगुरुसासरा ॥ १८ ॥

बाला:पिताचदौहित्रोभ्राताचभगिनीसुत:
एतेवश्यंपालनीया:प्रयत्नेनस्वशक्तित: ॥ १९ ॥
कन्यापुत्रपितावाळभाउबहिणिचासुत ॥ यांतेंअवश्यपाळावेंप्रयत्नानेंस्वशक्तिनें ॥ १९ ॥
अविभवेपिविभवेपितृमातृकुलंसुहृत्
पत्न्या:कुलंदासदासीभृत्यवर्गाश्चपोषयेत् ॥२०॥
दरिद्यानेंहिसंपन्नेंपितृमातृकुलांसुहृत् ॥ स्त्रीकुलादासदासींतेंभृत्यवर्गासपोषिजे ॥२०॥
विकलांगान्प्रव्रजितान्दीनानाथांश्चपालयेत्
कुटुंबभरणार्थेयोयत्नवान्नभवेन्नर: ॥ २१ ॥
अगेंविकलसंन्याशाआनाथांतेंहिदीनयां ॥ कुटुंबभरणासाठींजोयत्नानकरीनर ॥ २१ ॥
तस्यैसर्वगुणै:किंतुजीवन्नैवमृतश्चस:
नकुटुंबंभृतंयेननामिता:शत्रवोपिन ॥ २२ ॥
कायत्याचेसर्वगुणींसजीवाहिअसेमृत ॥ नकुटुंबापोषियेलेंशत्रूतेंननमीवलें ॥ २२॥
प्राप्तंसंरक्षितंनैवकस्याकिंजीवितेनवै
स्त्रीभिर्जितोऋणीनित्यंसुदरिद्रीचयाचक:॥ २३ ॥
मिळालेंरक्षिलेंनाहींतयाचेंकायजीवितें॥कर्जीस्त्रीजितजोनित्यदरिद्रीआणियाचक ।२३ ।
गुणहीनोर्यधीन:सन्मृताएतेसजीवका:
आयुर्वित्तंगृहच्छिद्रंमंत्रमैथुनभेषजं ॥ २४ ॥
अगुणीजितशत्रूंनींसजीवमृतहेजन ॥ आयुर्धनगृहच्छिद्रमंत्रमैथुनभेषज ॥ २४ ॥
दानमानापमानंचनवैतानिसुगोपयेत्
देशाटनंराजसभावेशनंशास्त्रचिंतनं ॥ २५ ॥
दानापमानहीमाननवहीगुप्तठेविजे ॥ फिर्णेदेशाराजसभींजाणेंशास्त्रासपाहणें ॥ २५ ॥
वेश्यानिदर्शनंविद्वन्मैत्रींकुर्यादतंद्रित:
अनेकाश्चतथाधर्मापदार्थापशवोनरा: ॥ २६ ॥
वेश्येशींहीपरीचयमैत्रीविद्वज्जनींतशी ॥ अनेकविधजेधर्मपदार्थनखापशू ॥ २६ ॥

देशाटणात्स्वानुभूताःपर्वतादेशरीतयः
कीदृशाराजपुरुषान्याय्यान्याय्यंचकीदृशं ॥ २७ ॥
देशाटणेंसमजतीदेशरीतीहिपर्वत ॥ कसेतेराजपुरुषन्यायअन्यायहीकसे ॥ २७ ॥

मिथ्याविवादिनःकेचकेवैसत्यविवादिनः
कीदृशीव्यवहारस्यप्रवृत्तिःशास्त्रलोकतः ॥ २८ ॥
खोटेचभांडतीकोणवदतीसत्यकोणते ॥ व्यवहारींकसीरीतिशास्त्रेंवालौकिकेंतशी । २८ ।

सभागमनशीलस्यतद्विज्ञानंप्रजायते
नाहंकारीचधर्मांधःशास्त्राणांतत्वचिंतनैः ॥ २९ ॥
सभेंतजोनित्यजाईसर्वहेंसमजेतया ॥ धर्मांधनाअहंकारीशास्त्रतत्वाविवेचने ॥ २९ ॥

एकंशास्त्रमधीयानोनविंद्यात्कार्यनिर्णयं
स्याद्बव्हागमशंदर्शीव्यवहारोमहानतः ॥ ३० ॥
एकाचिशास्त्राजोपाहीनजाणेंकार्यनिर्णया ॥ बहुशास्त्रसयापाहीमहानव्यवहारहा॥ ३०॥

बुद्धिमानभ्यसेन्नित्यंबहुशास्त्राण्यतंद्रितः
तदर्थंतुगृहीत्वापितदधीनोनजायते ॥ ३१ ॥
बुद्धिवानेंअभ्यसावींशास्त्रेंबहुनआळसें ॥ तेंणेंतदर्थघेउनितदधीननहोतसे ॥ ३१ ॥

वेश्यातथाविधावापिवशीकर्तुंनरंक्षमा
नेयात्कस्यवशंतद्वत्स्वाधीनंकारयेज्जगत् ॥ ३२ ॥
वेश्याजशीमनुष्यातेंसर्वदांकरितेवश ॥ स्वयेंनवशहोकोणास्वाधीनकरिजेजगा ॥ ३२ ॥

श्रुतिस्मृतिपुराणानामर्थविज्ञानमेवच
सहवासात्पंडितानांबुद्धिःपंडाप्रजायते ॥ ३३ ॥
श्रुतिस्मृतिपुराणांच्याअर्थाचेंजाणणेंतसें ॥ सहवासेंपंडितांचेबुद्धिहीप्रौढहोतसे ॥ ३३ ॥

देवपित्रातिथिभ्योन्नमदत्वानाश्नियात्क्वाचित्
आत्मार्थंयःपचेन्मोहान्नरकार्थेसजीवति ॥ ३४ ॥
अतिथीपितरांदेवांदेवोनीमगभाक्षिजे ॥ स्वार्थपाकाकरीमोहेंवांचेतोनरकार्थहो ॥ ३४ ॥

मार्गंगुरुभ्योबलिनेव्याधितायशवायच
राज्ञेश्रेष्ठायव्रतिनेयानगायसमुत्सृजेत् ॥ ३५ ॥

मार्गागुरूतेंबलितेंव्याधितातेंशवासही भूपाश्रेष्ठाव्रतीतेंहीयानगालागिसोडिजे ॥ ३५ ॥

शकटात्पंचहस्तंतुदशहस्तंतुवाजिनः
दूरतःशतहस्तंचातिष्ठेन्नागाद्वृषाद्दश ॥ ३६ ॥

गाड्याहुनीपांचहातघोड्याहूनीदाहातसें ॥ गजाहुनीहातशतवृषाहूनिंदहाकर ॥ ३६ ॥

शृंगीणांचनखीनांचदंष्ट्रीणांदुर्जनस्यच
नदीनांवसतौस्त्रीणांविश्वासंनैवकारयेत् ॥ ३७ ॥

नखींचाआणिशृंगींचादुर्जनाचाहिदंष्ट्रिचा नदीचाआणखीस्त्रीचाविश्वासनकरीकधीं ३७

खादंन्नगच्छेदध्वानंनचहास्येनभाषणं
शोकंनकुर्यान्नष्टस्यस्वकृतेरपिजल्पनं ॥ ३८ ॥

खातजाउंनयेमार्गातिंवीहंसतबोलणें ॥ शोकानकारिनष्टाचास्वकृतीनवदेतशी ॥ ३८ ॥

सशंकितानांसामीप्यंत्यजेद्वैनीचसेवनं
सल्लापंनैवश्रृणुयाद्गुप्तःकस्यापिसर्वदा ॥ ३९ ॥

सशांकितांचेंसानिध्यटाकावेंनीचसेवन ॥ गुप्तभाषणकोणाचेंनऐकावेंकधींचही ॥ ३९ ॥

उत्तमैरननुज्ञातंकार्यंनेछेच्चतैःसह
देवैःसाकंसुधापानाद्राहोछिन्नंशिरोयतः ॥ ४० ॥

श्रेष्ठींनकथिलेंत्यातेंनइछावेंतयांसहा ॥ देवासहसुधापानेंउडालेंराहुचेंशिर ॥ ४० ॥

महतोसत्कृतमपिभवेत्तद्भूषणायवै
विषपानंशिवस्यैवत्वन्येयांमृत्युकारकं ॥ ४१ ॥

अकार्यहीमहानातेंहोतसेशुद्धभूषण ॥ विषपानशिवाभूषाअन्यालामृत्युदायक ॥ ४१ ॥

तेजस्वीक्षमतेसर्वंभोक्तुंवान्हिरिवानघः
नसांमुख्येगुरोस्छेयंराज्ञःश्रेष्ठस्यकस्यचित् ॥४२॥

पचवीसर्वतेजस्वीजसाअग्नीपवित्रहो ॥ नबसावेंगुरूपुढेंराजाच्याश्रेष्ठयाचिया ॥ ४२ ॥

राजामित्रमितिज्ञात्वानकार्यंमानसेप्सितं
नेच्छेन्मूर्खस्यस्वामित्वंदास्यमिच्छेन्महात्मनां ॥ ४३ ॥

राजातेंमित्रजाणूनिनकरावेंमनेप्सित । मूर्खाचीस्वामितानेच्छीमोठयाचेंदास्यइच्छिजे । ४३ ।

विरोधंनज्ञानलवदुर्विदग्धस्यरंजनं
अत्यावश्यमनावश्यंक्रमात्कार्यंसमाचरेत् ॥ ४४ ॥

नविरोधाज्ञानलवेंपंडिताचेंहिरंजन ॥ जरूरिचेंविनुजरूरीक्रमेंकार्याससाधिजे ॥ ४४ ॥

प्राक्पश्चाद्राग्विलंबेनप्राप्तंकार्यंतुबुद्धिमान्
पित्राज्ञातेनवैमातृवधरूपेसुपूजिता ॥ ४५ ॥

पूर्वींपुढेंविलंबानेंप्राप्तकामासबुद्धिवान् ॥ आज्ञापित्याचीआईच्यावधरूपसुपूजिली ॥ ४५ ॥

धृतागौतमपुत्रेणह्यकार्येचिरकारिता
प्रेम्णासमीपवासेनस्तुत्यानत्याचसेवया ॥ ४६ ॥

धरिलीगौतमसुतेंअकार्यींदीर्घसूत्रता ॥ प्रेमेंसमीपवासानेंस्तुतीनेंनतिसेवनें ॥ ४६ ॥

कौशल्येनकलाभिश्चकथाभिर्ज्ञानतोपिवा
आदरेणार्जवेनैवशौर्याद्दानेनविद्यया ॥ ४७ ॥

कुशलत्वेंकलांनींहीकथांनींज्ञानभाषणीं ॥ आदरेंआर्जवेंशौर्येंदानेंविद्येंकरूनियां ॥ ४७ ॥

प्रत्युत्थानाभिगमनैरानंदस्मितभाषणैः
उपकारैःस्वाशयेनवशीकुर्याज्जगत्सदा ॥ ४८ ॥

ताजीमपेशवायीनेंआनंदेंहास्यभाषणें ॥ उपकारेंस्वाशयानेंसर्वावशकरीजगा ॥ ४८ ॥

एतेवश्यकरोपायादुर्जनेनिष्फलाःस्मृताः
तत्संन्निधिंत्यजेत्प्राज्ञःशक्तस्तंदंडतोजयेत् । ४९ ।

उपायहेवशकरदुर्जनींसर्वनिष्फळ ॥ प्राज्ञेंतत्संगसोडावाशक्तदंडकरीतया ॥ ४९ ॥

छलभूतैस्तुतद्रूपैरुपायैरेभिरेववा
श्रुतिस्मृतिपुराणानामभ्यासःसर्वदाहितः ॥५०॥

छलरूपेंहितद्योग्ययाउपायानिंवातसा ॥ श्रुतिस्मृतिपुराणांचाअभ्यासहितसर्वदा ॥५०॥

सांगानांसोपवेदानांसकलानानरस्यही
मृगयाक्षास्त्रियोपानंव्यसनानिनृणांसदा । ५१ ।

सांगांचासोपवेदांचासकलांचानरासया ॥ मृगयास्त्रीद्यूतपानव्यसनेहींसदानरा ॥५१॥

चत्वार्यैतानिसंत्यज्ययुक्त्यासंयोजयेत्क्वचित्
कूटेनव्यवहारंतुवृत्तिलोपंनकस्यचित् ॥ ५२ ॥

चारीहीटाकिजावींतयोजावींयुक्तिनेंकुठे ॥ कपटेंव्यवहारातेंनकरीवृत्तिलोपही ॥ ५२ ॥

नकुर्याच्चिंतयेत्कस्यमनसाप्यहितंक्वचित्
तत्कार्यंतुसुखंयस्माद्भवेत्त्रैकालिकंदृढं ॥ ५३ ॥

नकारावेंनचिंतावेंकोणाचेअहिताकधीं ॥ तेंकरावेंसौख्यजेणेंकालत्रयींअबाधित ॥५३॥

मृतेस्वर्गंजीवतिचविंद्यात्कीर्तिंदृढांशुभां
जागर्तिचसचिंत्तोयःआधिव्याधिसुपीडितः ।५४ ।

मरतांस्वर्गअसतांपावेकीर्तीसदाशुभ ॥ सचिंतजागतोनित्यआधिनेंव्याधिपीडित ॥५४॥

जारश्चोरोबलिद्विष्टोविषयीधनलोलुपः
कुसहायकिनृपतिर्भिन्नामात्यस्सुहृत्प्रजः । ५५ ।

जारचोरबलिद्वेषीविषयींधनलोलुप ॥ कुसहायीकुनृपतिभिन्नामात्यसुहृत्प्रज ॥ ५५ ॥

कुर्याद्यथासमीक्ष्यैतत्सुखंस्वप्याच्चिरंनरः
राज्ञोनानुकृतिंकुर्यान्नचश्रेष्टस्यकस्यचित् ॥५६ ॥

करावेंयाविचारोनीयेईझोपसुखेंजशी ॥ राजाकरीतेंविनतेंकरीश्रेष्टजसेंकरी ॥ ५६ ॥

नैकोगच्छेद्व्यालव्याघ्रचोरेषुचप्रबाधितुं
जिघांसंतंजिघांसयाद्गुरुमप्याततायिनं ॥ ५७ ॥

नजावेंयेकटेंसर्पवाघचोरावरीकधीं ॥ मारणाऱ्यासमारावेंआततायीगुरूजरी ॥ ५७ ॥

कलहेनसहायस्यात्संरक्षेद्बहुनायकं
गुरूणांपुरतोराज्ञोनचासीतमहासने ॥ ५८ ॥

सहायनाहोकलहींरक्षावेंबहुपालका ॥ राजाचेगुरुचेअग्रींनबसावेंमहासनीं ॥ ५८ ॥

प्रौढपादोनतत्कार्यंहेतुभिर्विकृतिंनयेत्
यत्कर्तव्यंनजानातिकृतंजानातिचेतरः ॥ ५९ ॥

मांडीवरीपायनतत्काममोडीनहेतुनें ॥ जाचेंसम्जेनकर्तव्यकेल्यातेंलोकजाणती ॥ ५९॥

नैववक्तिचकर्तव्यंकृतंयश्चोत्तमोनरः
नाप्रियाकथितंसम्यङ्मनुतेनुभवंविना ॥ ६० ॥

नबोलेकृतकर्तव्यजाणातोनरउत्तम ॥ नस्त्रीकथितसत्यत्वेंमानीअनुभवाविना ॥ ६० ॥

अपराधंमातृस्नुषाभ्रातृपत्निसपत्निजं
षोडशाद्वात्परंपुत्रंद्वादशाद्वात्परांस्त्रियं ॥ ६१ ॥

अपराधाआइसूनबंधुस्त्रीचासपत्निचा ॥ सोळावर्षावरीपुत्राबारावर्षांस्त्रियेसही ॥ ६१ ॥

नताडयेद्दुष्टवाक्यैःपीडयेन्नस्नुषादिकं
पुत्राधिकाश्चदौहित्राभागिनेयाश्चभ्रातरः । ६२ ।

नताडावेंदुष्टवाक्यैंनपीडावेंसुनादिकां ॥ तनयाधिकदौहित्रबंधूबहिणिचेतसे ॥ ६२ ॥

कन्याधिकाःपालनीयाभ्रातृभार्यास्नुषास्वसा
आगमार्थेहियततेरक्षणार्थेहिसर्वदा ॥ ६३ ॥

कन्येहुनीहिरक्षाव्याभ्रातृस्त्रीबहिणीसुना ॥ मिळवायासयततोरक्षणार्थेहिसर्वदा ॥ ६३॥

कुटुंबपोषणेस्वामीतदन्येतस्कराइव
अनृतंसाहसंमौर्ख्यंकामाधिक्यंस्त्रियांयतः ॥६४॥

कुटुंबपोषणास्वामीबाकीचेचोरजेविते ॥ खोटेंसाहसमूर्खत्वकामाधिक्यस्त्रियांतयां । ६३ ।

कामाद्विनैकशयनेनैवसुप्यात्स्त्रियांसह
दृष्ट्वाधनंकुलंशीलंरूपंविद्यांबलंवयः ॥ ६५ ॥

एकशय्याविनाकामेंननिजावेंस्त्रियेसह ॥ पाहेधनाकुलाशीलारूपाविद्येबलावया ॥ ६५ ॥

कन्यांदद्यादुत्तमंचेन्मैत्रींकुर्यादथात्मनः
भार्यार्थिनंवयोविद्यारूपिणंनिर्धनंत्वपि ॥ ६६ ॥

द्यावीकन्याश्रेष्टजरीमैत्रीचाकरिजेतयीं भार्यार्थींतेवयोविद्यासुरूपानिर्धनासही ॥ ६६ ॥

नकेवलेनरूपेणवयसानधनेनच
आदौकुलंपरीक्षेतततोविद्यांततोवयः ॥ ६७ ॥
नकेवलारूपवंतानवयानधनीतसा ॥ आधींकुलपरीक्षावींविद्यामगपुढेंवय ॥ ६७ ॥
शीलंधनवयोरूपंदेशंपश्चाद्विवाहयेत्
कन्यावरयतेरूपंमातावित्तंपिताश्रुतं ॥ ६८ ॥
शीलापुढेंमगधनादेशापाहूनिदेइजे ॥ कन्यावरीतसेंरूपामाताद्रव्यपिताश्रुत ॥ ६८ ॥
बांधवाःकुलमिछंतिमिष्टान्नमितरेजनाः
भार्यार्थंवरयेत्कन्यामसमानर्षिगोत्रजां ॥ ६९ ॥
बंधूकुलातेंपाहातीमिष्टान्नादुसरेजन ॥ भार्येसाठींवरीकन्येगोत्रप्रवरपाहुनी ॥ ६९ ॥
भ्रातृमतींसुकुलांचयोनिदोषविवर्जितां
क्षणशःकणशःश्चैवविद्यामर्थंचसाधयेत् ॥ ७० ॥
बंधूजिलासुकुळिचीयोनिदोषेंविहीनजी ॥ क्षणानेंवाकणानेंहीविद्याद्रव्यासमेळवी ॥ ७० ॥
नत्याज्यौतुक्षणकणौनित्यंविद्याधनार्थिना
सुभार्यापुत्रमित्रार्थंहितंनित्यंधनार्जनं ॥ ७१ ॥
नटाकावेक्षणकणविद्याद्रव्यार्थिनेंकधीं ॥ स्त्रीपुत्रमित्रयांसाठींहितनित्यधनार्जन ॥ ७१ ॥
दानार्थंचविनात्वैतेःकिंधनैश्चजनैश्चकिं
भाविसंरक्षणक्षमंधनंयत्नेनरक्षयेत् ॥ ७२ ॥
दानासाठींविमायाच्याधनीकायजनींतसे ॥ येणाऱ्यासमयासाठींयत्नानेंधनरक्षिजे ॥ ७२ ॥
जीवामिशतवर्षंतुनंदामिचधनेनवै
इतिबुध्यासंचिनुयाद्धनंविद्यादिकंसदा ॥ ७३ ॥
वांचेनशतवर्षेंमीधनेनांदेनमीसदा ॥ संचवीबुद्धिनेंऐशाधनाविद्येसहीसदा ॥ ७३ ॥
पंचविंशत्यब्दपूरंतदर्धंवातदर्धकं
विद्याधनंश्रेष्ठतरंतन्मूलमितरद्धनं ॥ ७४ ॥
पंचीषवर्षेंपर्यंततदर्धार्धंहिवातसे ॥ विद्याधनअसेश्रेष्ठतन्मूलधनदूसरें ॥ ७४ ॥

दानेनवर्धतेनित्यंनभारायननीयते
अस्तियावत्तुसधनस्तावत्सर्वैस्तुसेव्यते ॥ ७५ ॥

दानानेंवाढतेंनित्यनभारानाचेजाइजे ॥ धनीजोंवरिहाआहेतोंवरीसर्वमानिती ॥ ७५ ॥

निर्धनस्त्यज्यतेभार्यापुत्राद्यैःसगुणोप्यतः
संसृतौव्यवहारायसारभूतंधनंस्मृतं ॥ ७६ ॥

निर्धनात्याजितभार्यापुत्रादिकगुणीजरी ॥ संसारिंव्यवहारालासारभूतअसेंधन ॥ ७६ ॥

अतोयतेततत्प्राप्त्यैनरःसूपायसाहसैः
सुविद्ययासुसेवाभिःशौर्येणकृषिभिस्तथा ॥ ७७ ॥

यातत्प्राप्तिसयतिजेउपायेंसाहसेंनरें ॥ सुविद्येनेंसुसेवेनेंशौर्यानेंशेतिनेंतसें ॥ ७७ ॥

कौसीदवृध्यापण्येनकलाभिश्चप्रतिग्रहैः
ययाकयाचापिवृत्याधनवान्स्यात्तथाचरेत् ॥ ७८ ॥

व्याजेंवाहाटकरूनीकलांनींहीप्रतिग्रहें ॥ ज्याकोणत्याहिवृत्तीनेंधनीहोयतसेंकरी ॥ ७८ ॥

तिष्ठंतिसधनद्वारेगुणिनःकिंकराइव
दोषाअपिगुणायंतेदोषायंतेगुणाअपि ॥ ७९ ॥

राहतीधनिकद्वारींजविंकिंकरतेगुणी ॥ दोषहीगुणहोतातिगुणदोषासपावती ॥ ७९ ॥

धनवंतोनिर्धनस्यानिंद्यतेनिर्धनोखिलैः
यथानजानंतिधनंसंचितंकतिकुत्रवै ॥ ८० ॥

धनिकाचेनिर्धन्याचेद्रारिद्र्यासर्वानिंदिती ॥ नजाणतिजसेद्रव्याकोठेंसंचिततेंकिती ॥ ८० ॥

आत्मास्त्रीपुत्रमित्राणिसलेखंधारयेत्तथा
नैवास्तिलिखितादन्यत्स्मारकंव्यवहारिणां ॥ ८१ ॥

स्त्रीपुत्रमित्रहींसर्वलिहुनीठेविजेतसें ॥ लिहिण्यावांचुनीनाहींव्यवहरींस्मृतिप्रद ॥ ८१ ॥

नलेखेनविनाकुर्याद्व्यवहारंसदाबुधः
निर्लोभधनिकेराज्ञिविश्वस्तेक्षमिणांवरे ॥ ८२ ॥

लेखाविनानकारिजेव्यवहाराकधींबुधें ॥ निर्लोभिजोवाधनिकविश्वासूजोक्षमीतसा ॥ ८२ ॥

सुसंचितंधनंधार्यंगृहीतालिखितंतुवा
मैत्र्यर्थेयाचितंदद्यादकूसीदंधनंसदा ॥ ८३ ॥

ठेवावेंसंचिताद्रव्याअथवालेखघेउनी ॥ मैत्र्यर्थमागतांदेईव्याजाविणधनासदा ॥ ८३ ॥

तस्मिन्स्थितंचेन्नबहुहानिकृच्चतथाविधं
दृष्ट्वाधमर्णवृध्यापिव्यवहारक्षमंसदा ॥ ८४ ॥

राहीजरीमबहुजेंहानिकारकतोंविंदे ॥ पाहूनिसाकवाद्यावेंव्याजेंवेव्हारकासदा ॥ ८४ ॥

संबंधंसप्रतिभुवंधनंदद्याच्चसाक्षिमत्
गृहीतलिखितंयोग्यमानंप्रत्यागमेसुखं ॥ ८५ ॥

सबंधेंठेविगाहाणद्यावेंसाक्षीसठेउनी ॥ खताकरीयोग्यमानेंजसेंपरततासुख ॥ ८५ ॥

नदद्याद्वृद्धिलोभेननष्टंमूलधनंभवेत्
आहारेव्यवहारेचत्यक्तलज्जःसुखीभवेत् ॥ ८६ ॥

नद्यावेंव्याजलोभानेंनष्टमूळनहोधन ॥ आहारींव्यवहारींवाहोसुखीत्यक्तलज्जजो ॥ ८६ ॥

धनंमैत्रीकरंदानेचादानेशत्रुकारकं
कृत्वास्वांतेतथौदार्यंकार्पण्यंबहिरेवच ॥ ८७ ॥

धनमैत्रीकरंदितांघेतांनाशत्रुकारक ॥ चित्तींऔदार्यठेवावेंदावीकार्पण्यतेंवरी ॥ ८७ ॥

उचितंतुव्ययंकालेनरःकुर्यान्नचान्यथा
सुभार्यापुत्रमित्राणिशक्त्यासंरक्षयेद्धनैः ॥ ८८ ॥

समयींयोग्यखर्चातेंकरीनभलतेंतऱ्हे ॥ सुभार्यैतेंपुत्रमित्रांशक्तीनेंरक्षिजेधनें ॥ ८८ ॥

नात्मापुनरतोत्मानंसर्वैःसर्वंपुनर्भवेत्
पश्यतिस्मसजीवश्चेन्नरोभद्रशतानिच ॥ ८९ ॥

पुन्हाआत्मानह्मणुनीसर्वांहींरक्षिजेतया ॥ वांचेजरीतरीपाहेस्वयेंभद्रशतासतो ॥ ८९ ॥

सदारप्रौढपुत्रान्द्राकश्रेयोर्थीविभजेत्पिता
सदारभ्रातरःप्रौढाविभजेरन्स्युःपरस्परं ॥ ९० ॥

सस्त्रीकप्रौढतनयाश्रेयातातेंविभागिजे ॥ तशाचबंधुवर्गानिंवेगळेंहोइजेस्वयें ॥ ९० ॥

एकोदरा अपि प्रायो विनाशायान्यथा खलु
नैकत्र संवसेच्चापि स्त्रीद्वयं मनुजस्य तु ॥ ९१ ॥

सहोदरजरी बंधु विनाशा लागि अन्यथा ॥ नराहती येकजागीं दोन होन कधीं स्त्रिया ॥ ९१ ॥

कथं वसेत्तद्बहुत्वं पशूनां तु नरद्वयं
विभजेयुर्न तत्पुत्राय द्धनं वृद्धिकारणं ॥ ९२ ॥

कशा बहूत राहाती पशु जाति नरद्वय ॥ पुत्रीं तें न विभागावें वृद्धि लाहेतु जें धन ॥ ९२ ॥

अधमर्णस्थितं चापि यद्देयं चौत्तमर्णिकं
यस्येच्छेदुत्तमां मैत्रीं कुर्यान्नार्थाभिलाषकं ॥ ९३ ॥

दुसऱ्याचें कर्ज देणें तसें घेणें हि जें असे ॥ ज्याचे इच्छी सुमैत्री तें धनेच्छा न करी तिथें ॥ ९३ ॥

परोक्षे तद्गृहश्चारं तत्स्त्रीसंभाषणं तथा
तन्न्यूनदर्शनं नैव तत्प्रतीपविवादनं ॥ ९४ ॥

मागें अंतःपुरीं जाणें स्त्रीशीं भाषण ही तसें ॥ तयांचें न्यून पहाणें बोलणें हि विरुद्ध जें ॥ ९४ ॥

असाहाय्यं च तत्कार्ये ह्यनिष्टोपेक्षणं न च
सकुसीदमकुसीदं धनं यच्चौत्तमार्णिकं ॥ ९५ ॥

सहाय न तया कामीं तदनिष्टा उपेक्षणें ॥ सव्याज व्याजरहित धन जें सावकारिक ॥ ९५ ॥

दद्याद्गृहीतमिव नो चोभयोः क्लेशकृद्यथा
नासाक्षिमच्चालिखितं ऋणपत्रस्य पृष्ठतः ॥ ९६ ॥

द्यावें न घेतल्या तुल्य दोघांही क्लेश देन जें ॥ लिही असाक्ष न खतात याच्या पाठिं साक्ष तीं ॥ ९६ ॥

आत्मपितृमातृगुणैः प्रख्यातश्चोत्तमोत्तमः
गुणैरात्मभवैः ख्यातः पैतृकैर्मातृकैः पृथक् ॥ ९७ ॥

स्वीय माता पितृगुणें ख्यात तो उत्तमोत्तम ॥ स्वगुणें ख्यात ताताच्या वेगळा आइचे तसा ॥ ९७ ॥

उत्तमो मध्यमो नीचोऽधमो मातृगुणैर्नरः
कन्यास्त्रीभगिनीभाग्यो नरः सोऽप्यधमाधमः ॥ ९८ ॥

श्रेष्ठ मध्यम हीं नीच [illegible] ॥ ९८ ॥

भूत्वामहाधनःसम्यक्पोष्यवर्गंतुपोषयेत्
अदत्वायत्किंचिदपिननयेद्दिवसंबुधः ॥ ९९ ॥

महाधनीहोउनियांपोष्यवर्गासपोषिजे ॥ नदेतांकांहिंदिवसानेइजेनकधींबुधें । ९९ ।

स्छितोमृत्युमुखेचाहंक्षणमायुर्ममास्तिन
इतिमत्वादानधर्मौयथेष्टौतुसमाचरेत् ॥ २०० ॥

आहेंमीमृत्युवदनींआयुष्यनममक्षण ॥ मानीअसेंदानधर्मींयथेष्टकरिजेतया ॥ २०० ॥

नतौविनामेपरत्रसहायाःसंतिचेतरे
दानशीलाश्रयाल्लोकोवर्ततेनशठाश्रयात् ॥ १ ॥

मलातयाविनास्वर्गींसहायनदुजाअसे ॥ दानशीलाश्रयेंलोकवागतोनशठाश्रयें ॥ १ ॥

भवंतिमित्रादानेनद्विषंतोपिचकिंपुनः
देवतार्थंचयज्ञार्थंब्राह्मणार्थंगवार्थकं ॥ २ ॥

शत्रुहीमित्रहोतातदानेंइतरनाकसे ॥ यज्ञासाठींदेवतार्थब्राह्मणागाइसाठिंतें ॥ २ ॥

यद्दत्तंतत्पारलोक्यंसंविद्दतंतदुच्यते
बंदिमागधमल्लांदिनटानर्थंचदीयते ॥ ३ ॥

दिलेंतेंपरलोकार्थविद्दूदत्तवदातया ॥ भाटमागधमल्लांतेंनटांतेंदइजेतसें ॥ ३ ॥

पारितोष्यंयशोर्थंतच्छ्रियादत्तंतदुच्यते
उपायनीकृतंयत्तुसुहृत्संबांधिबंधुषु ॥ ४ ॥

बक्षीसतेंयशासाठींश्रीदानवदिजेतया ॥ अहेरवाजेनजरसुत्दत्संबांधिबंधुतें ॥ ४ ॥

विवाहादिषुवाचारदत्तंन्हीदत्तमेवतत्
राज्ञेचबलिनेदत्तंकार्यार्थंकार्यघातिने ॥ ५ ॥

लग्नादिकींवाआचारेंन्हीदत्तवदतीतया ॥ दिलेंराजासबलितेंकार्यार्थैकार्यघातका ॥ ५ ॥

पापभीत्याथवायच्चतत्तुभीदत्तमुच्यते
यद्दत्तंहिंस्त्रवृध्यर्थंनष्टंद्यूताविनाशितं ॥ ६ ॥

द्यावेंजें पापभीतीनेंभीदत्तवदतीतया ॥ दिलेंजेंहिंसकावाढूंद्यूतनष्टगमावलें ॥ ६ ॥

चोरैर्हृतंपापदंतत्परस्त्रीसंगमार्थकं
आराधयतियंदेवंतमुत्कृष्टतरंवदेत् ॥ ७ ॥

चोरींहृतदिलेंपापेंपरस्त्रीसंगमार्थजें ॥ आराधितोजोजादेवातयाउत्कृष्टबोलिजे ॥ ७ ॥

तन्यूनतानैवकुर्याज्जोषयेत्तस्यसेवनं
विनादानार्जवाभ्यानभुव्यस्तिचवशीकरं ॥ ८ ॥

त्याचेंन्यूनत्वनकरीतत्सेवनहिवाढवी ॥ विनादानार्जवालोकींनअसेचवशीकर ॥ ८ ॥

दानक्षीणोविवार्धिष्णुःशशीवक्रोप्यतःशुभः
विचार्यस्नेहंद्वेषंवाकुर्यात्कृत्वानचान्यथा ॥ ९ ॥

वाटेतोजोक्षीणदानेंवक्रहीशुभतोशशी ॥ स्नेहद्वेषविचारूनिकरीकेल्यानअन्यथा । ९ ।

नापकुर्यान्नोपकुर्याद्भवतोनर्थकारिणौ
नातिक्रौर्यंनातिशाठ्यंधारयेन्नातिमार्दवं ॥ १० ॥

नापकारानोपकाराअनर्थकरतेकरी ॥अत्यंतक्रूरनशठअतिमार्दवनाधरी ॥ १० ॥

नातिवादंनातिकार्यासक्तिमत्याग्रहंनच
अतिसर्वंनाशहेतुह्यतोत्यतंविवर्जयेत् ॥ ११ ॥

अतिवादनआसक्तिकार्यींअत्याग्रहानतें ॥ नाशाहेतूसर्वअतीया अत्यंतासटाकिजे ॥ ११ ॥

उद्वेजतेजनःक्रौर्यात्कार्पण्यादतिनिंदति
मार्दवान्नैवगणयेदपमानोतिवादतः ॥ १२ ॥

क्रौर्यंउद्विग्नहोलोककृपणत्वेंहिनिंदिती ॥ मृदुत्वेंनगणेंकोणीअतिवादेंअनादर ॥ १३ ॥

अतिदानेनदारिद्र्यंतिरस्कारोतिलोभतः
अत्याग्रहान्नरस्यैवमौर्ख्यंसंजायतेखलु ॥ १३ ॥

अतिदानेहीदारिद्र्यतिरस्कारहिलोभितो ॥ अत्याग्रहेंलोकिंहोयेनराचोंव्यक्तमूर्खता ।१३।

अनाचाराद्धर्महानिरत्याचारस्तुमूर्खता
ह्यधिकोस्मीतिसर्वेभ्योह्यधिकज्ञानवानहं ॥१४॥

अनाचारेंधर्महानिअत्याचारेंहिमूर्खता ॥ सर्वांहुनीमीअधिकज्ञानहीवहुतेंमला ॥ १४ ॥

धर्मतत्वमिदमितिनैवंमन्येतबुद्धिमान्
नेछेत्स्वाम्यंतुदेवेषुगोषुचब्राह्मणेषुच ॥ १५ ॥
हेंचऐसेंधर्मतत्वाबुद्धिवानेंनमानिजे ॥ नइछीस्वामितादेवींगाईब्राह्मणयांवरी ॥ १५ ॥
महानर्थकरंह्येतत्समग्रकुलनाशनं
भजनंपूजनंसेवामिछेदेतेषुसर्वदा ॥ १६ ॥
महाअनर्थाकारिहेंसमग्रकुळनाशन ॥ भजनापूजनासेवेयाठाईंइछिजेसदा ॥ १६ ॥
नज्ञायतेब्रह्मतेजःकस्मिन्कीदृक्प्रतिष्ठितं
पराधीनंनैवकुर्यात्तरुणीधनपुस्तकं ॥ १७ ॥
ब्रह्मतेजनजाणीवकसेंकोठेंवसेसदा ॥ नकरावेंपराधीनतरुणीधनपुस्तका ॥ १७॥
कृतंचैल्लभ्यतेदैवाद्भ्रष्टंनष्टंविमर्दितं
बव्हर्थंनत्यजेदल्पहेतुनाल्पंनसाधयेत् ॥ १८ ॥
दिलेंतेंदैविमिळतेंभ्रष्टनष्टविमार्दित ॥ बव्हर्थानत्यजीअल्पेंहेतुनेंअल्पसाधिन ॥ १८ ॥
बव्हर्थव्ययतोधीमानभिमानेनवैक्वचित्
बव्हर्थव्ययभीत्यातुसत्कीर्तिंनत्यजेत्सदा ॥ १९॥
धीमान्बहुद्रव्यखर्चनकोठेंअभिमानही ॥ बहूमखर्चभीतीनेसुकीर्तिनाचिसोडिजे॥ १९ ॥
भटानामसदुक्त्यातुनापेत्कुप्यानतैःसह
लज्यतेनसुहृद्योनाभिद्यतेदुर्मनाभवेत् ॥ २० ॥
वीरांचेक्रूरवचनेंनकोपावेंतयांसह ॥ लाजेजेणेंसुहृद्वर्गभेदेदुर्मनहोयन ॥ २० ॥
वक्तव्यंनतथाकिंचिद्विनोदेपिचधीमता
आजन्मसेवितैर्दानैर्मानैश्श्चपरिपोषितं ॥ २१ ॥
वदावेंनतसेंकांहींबुद्धिवानेंविनोदिंही ॥ आजन्मसेवनेंदानेंमानेंहीपरिपोषित ॥ २१ ॥
तीक्ष्णवाक्यान्मित्रमपितत्कालंयातिशत्रुतां
वक्रोक्तिशल्यमुद्धर्तुंनशक्यंमानसंयतः ॥ २२ ॥
मित्रहीकटु[illegible] ॥२२॥

वहेदमित्रंस्कंधेनयावत्स्यात्स्वबलाधिकः
ज्ञात्वानष्टबलंतंतुभिंद्यात्घटमिवाश्मनि ॥ २३ ॥

वाहावेंशत्रुतेंस्कंधींजोवरीतोबलाधिक ॥ जाणूनियांनष्टबलाघटसादगडींस्रजी ॥ २३ ॥

नभूषयत्यलंकारोनराज्यंनचपौरुषं
नविद्यानधनंतादृक्यादृक्सौजन्यभूषणं ॥ २४ ॥

अलंकारनशोभादेनराज्यनचपौरूष ॥ नविद्यानाधनतसेंजसेंसौजन्यभूषण ॥ २४ ॥

अश्वेजवोवृषेधैर्यंमणौकांतिःक्षमानृपे
हावभावौचवैश्यायांगायकेमधुरस्वरः ॥ २५ ॥

अश्वावेगवृषाधैर्यमणींतेजक्षमानृपीं ॥ वेश्येतेंहावभावादिगायकामधुरस्वर ॥२५ ॥

दातृत्वंधनिकेशौर्यंसैनिकेबहुदुग्धता
गोषुदमस्तपस्वीषुविद्वत्सुवावदूकता ॥ २६ ॥

धनिकादातृताशौर्यशिपायाबहुदुग्धता ॥ गौतेंदमतपस्वींतेंविद्वांनींबहुवक्तृता ॥ २६ ॥

सभ्येष्वपक्षपातस्तुतथासाक्षिषुसत्यवाक्
अनन्यभक्तिभृत्येषुसुहितोक्तिश्चमंत्रिषु ॥ २७॥

अपक्षपातसभ्यांनांसत्यभाषणसाक्षितें ॥ अनन्यभक्तीदासांतेंसुहितोक्तिप्रधानया॥२७॥

मौनंमूर्खेषुचस्त्रीषुपातिव्रत्यंसुभूषणं
महादुर्भूषणंचैतद्विपरीतममीषुच ॥ २८ ॥

मौनमूर्खास्त्रियेलागीपातिव्रत्याचेंभूषण ॥ दुर्भूषणमाहाहोतेंजरीहेंविपरीतहो ॥ २८ ॥

भात्येकनायकंनित्यंनैवानिर्बहुनायकं
नचहिंस्रमुपेक्षेतशक्तोहन्याच्चतत्क्षणे ॥ २९ ॥

येकहीस्वामिनबहुअनायकतसेंनतें ॥ मारकानउपेक्षावेंवधीशक्ततयाक्षणीं ॥ २९ ॥

पैशून्यंचंडताचौर्यंमात्सर्यमतिलोभता
असत्यंकार्यघातित्वंतथालसकताप्यलं ॥ ३० ॥

पैशून्यचंडताचोरीअतिलोभाहिमत्सर ॥ कार्यघातकताखोटेंयोग्यतेआळसीपण ॥ ३० ॥

गुणिनामपिदोषायगुणानाछाद्यजायते
मातुःप्रियायाःपुत्रस्यधनस्यचविनाशनं ॥ ३१ ॥
आछादुनीगुणिगुणाहोतातीव्यक्तदोषहे ॥ मालाभार्यापुत्रयांचेंधनाचेंहीविनाशना ३१।
बाल्येमध्येचवार्धक्येमहापापफलंक्रमात्
श्रीमतामनपत्यत्वमधनानांचमूर्खता ॥ ३२ ॥
बाल्यींत।रुण्यिवृद्धत्वींमहापापफलक्रमें अपत्याभावधनिकादरिद्यातेंहिमूर्खता ॥ ३२ ॥
स्त्रीणांषंढपतित्वंचनसौख्यायेष्टनिर्गमः
मूर्खःपुत्रोधवाकन्याचंडीभार्यादरिद्रता ॥ ३३ ॥
नस्त्रीतेंषंढपतितानसौख्याइष्टनिर्गम ॥ रंडाकन्यापुत्रमूर्खचंडीभार्यादरिद्रता ॥ ३३ ॥
नीचसेवाटणंनित्यंनैतत्षडकंसुखायच
नाध्यापनेनाध्ययनेनदेवेनगुरौद्विजे ॥ ३४ ॥
नीचसेवाफिरेनित्यहेंषड्कनसुखासहो ॥ नाध्यापनींनाध्ययनींनदेवींगुरुब्राह्मणीं ॥ ३४ ॥
नकलासुनसंगीतेसेवायांनार्जवेस्त्रियां
नशौर्येनचतपसिसाहित्येरमतेमनः ॥ ३५ ॥
नकलांतनसंगीतींनार्जवींसेवनींस्त्रियीं ॥ नशूरत्वींहिनतपींसाहित्यींनरमेमन ॥ ३५ ॥
यस्यमुक्तःखलःकिंवानररूपपशूश्चसः
अन्योदयासहिष्णुश्चछिद्रदर्शीविनिंदकः ॥३६ ॥
जाचेंतोमुक्तखलवानररूपपशूहिवा ॥ नसोसेअन्यउदयाछिद्रपाहेविनिंदक ॥ ३६ ॥
द्रोहशीलःस्वांतमलःप्रसन्नास्यःखलःस्मृतः
एकस्यैवनपर्याप्तमास्तियद्ब्रह्मकोशजं ॥ ३७ ॥
द्रोहीसदा।चित्तिमळवरीहास्यमुखींदिसे ॥ नसेएकासपुरतेंधनसर्वजगांतलें ॥ ३७ ॥
आशाबद्धस्योत्झितस्यतस्याल्पमपिपूर्तिकृत्
करोत्यकार्यंसाशोन्यंबोधयत्यनुमोदते ॥ ३८ ॥
आशाबद्धाअनाशालास्वल्पहीपूर्णहोतसे ॥ करीलोभीअकार्यातेंबोधीदेअनुमोदना ।३८

भवत्यन्योपदेशार्थेधूर्ताःसाधुसमाःसदा
स्वकार्यार्थप्रकुर्वंतिह्यकार्याणांशतंतुते ॥ ३९ ॥

होतीअन्योपदशीतेधूर्तसाधुतसंजगीं ॥ स्वकायासाठिंकारितीअकार्यैतींशतावधी ॥ ३९ ॥

पित्रोराज्ञांपालयतिसेवनेचनिरालसः
छायेववर्ततेनित्यंयततेचागमायवै ॥ ४० ॥

पितराचेंवाक्यपाळीसेवनीजोनिरालस ॥ वागेछायातसानित्ययतेप्राप्त्यर्थसर्वदा ॥ ४० ॥

कुशलःसर्वविद्यासुसपुत्रःप्रीतिकारकः
दुःखदोविपरीतोयोदुर्गुणधननाशकः ॥ ४१ ॥

सर्वविद्येंतकुशलतोपुत्रप्रियहोतसे ॥ विपर्यासेंदुःखदेतोदुर्गुणीधननाशक ॥ ४१ ॥

पत्यौनित्यंचानुरक्ताकुशलागृहकर्मणि
पुत्रप्रसूसुशीलायाप्रियाःपत्युसुयौवना ॥ ४२ ॥

पतिसेंवेतनिरतघरकामींहुशारजी ॥ पुत्रजीतेजिसुशीलबांधेसुदपतिप्रिया ॥ ४२ ॥

पुत्रापराधान्क्षमतेयापुत्रपरिपोषिणी
सामाताप्रीतिदानित्यंकुलटान्यातिदुःखदा ॥ ४३ ॥

क्षमीपुत्रापराधांतेंपुत्रापोशीसदैवजी ॥ तीआईप्रीतिदानित्यव्यभिचारिणीदुःखद ॥ ४३ ॥

विद्यागमार्थंपुत्रस्यवृत्यर्थंयततेचयः
पुत्रंसदासाधुशास्तिप्रीतिकृत्सपितानृणी ॥ ४४ ॥

विद्यालाभार्थपुत्रालावृत्तिसाठींहिजोयते ॥ लावीसुशिक्षातनयाअनृणीतोपिताप्रिय ॥ ४४ ॥

यःसाहाय्यंसदाकुर्यात्प्रतीपन्नवदेत्क्वचित्
सत्यंहितंवक्तियातिदत्तंगृण्हातिमित्रतां ॥ ४५ ॥

सदासाहायकरिजोवांकडेंनवदेकधीं ॥ खरेंहितवदेयेईमित्रत्वेंघेतदेतसे ॥ ४५ ॥

नीचस्यातिपरिचयोह्यन्यगेहेसदागतिः
जातौसंघप्रातिकूल्यंमानहानिर्दरिद्रता ॥ ४६ ॥

अतिस्नेहननीचाशींजाणेंपरघरींतसें ॥ जातिसंघविरोधानेंमानहानीदारिद्रता ॥ ४६ ॥

व्याघ्राग्निसर्पहिंस्त्राणांनहिसंघर्षणंहितं
सेवितत्वात्तुराज्ञोनैतेमित्राःकस्यसंतिहि ॥ ४७ ॥

व्याघ्राग्निसर्पदुष्टांचासंबंधनकधींहित ॥ सुसेवनींहिनृपतीकोणाचेहीनमित्रहे ॥ ४७ ॥

दौर्मनस्यंचसुहृदांसुप्राबल्यंरिपोःसदा
विद्वत्स्वपिचदारिद्र्यंदारिद्र्याद्बव्हपत्यता ॥ ४८ ॥

सुहृदांचेंदुर्मनत्वप्राबल्यरिपुचेंतसें ॥ विद्वत्सेनेंदारिद्रत्वदारिद्र्येंबहुसंतती ॥ ४८ ॥

धनीगुणीवैद्यनृपजलहीनेसदास्थिति:
दु:खायकन्यकाप्येकापित्रोरपिचयाचनं ॥ ४९ ॥

धनीगुणीवैद्यनृपजलहीनींसदास्थिति ॥ दुखदाएकहीकन्यापितरांतेविनागणे ॥ ४९ ॥

सुरूप:सधन:स्वामीविद्वानपिबलाधिक:
नकामयेद्यथेष्टंय:स्त्रीणांनैवसुसौख्यकृत् ॥ ५० ॥

सुरूपसधनस्वामीविद्वानहिबलाधिक ॥ नजोयथेष्टविषयीस्त्रियांतेंतोनसौख्यद ॥ ५० ॥

योयथेष्टंकामयतेस्त्रीतस्यवशगाभवेत्
संधारणाल्लालनाच्चयथायातिवशंशिशु: ॥ ५१ ॥

यथेष्टविषयींजोकांहोतीवशतयास्त्रिया ॥ घेण्यानेंबालालनानेंजसाहोयशिशूवश ॥ ५१ ॥

कार्यंतत्साधकादींश्चतद्व्ययंसुविनिर्गमं
विचिंत्यकुरुतेज्ञानीनान्यथालध्वपिक्कचित् ॥ ५२ ॥

कार्यंतत्साधकादींतेंतत्खर्चमिसलींसही ॥ पाहूनिविबुधेंकीजेअन्यथानल्हानहीं ॥ ५ ॥

नचव्ययाधिकंकार्यंकर्तुमीहेतपंडित:
लाभाधिक्यंयत्क्रियतेचेषद्वाव्यबसायिभि: ॥ ५३ ॥

करायाबहुखर्चाचेंकामइच्छीनपंडित ॥ लाभाधिकजईत्यातेंकरावेंव्यवहारिनें ॥ ५३ ॥

मूल्यंमानंचपण्यानांयाथात्म्यान्मृग्यतेसदा
तप:स्त्रीकृषिसेवासोपभोग्येनापिभक्षणे ॥ ५४ ॥

बाजारींचेंमोलमानयथार्थेंपाहिजेसदा ॥ तपस्त्रीशेतिसेवेंतउपभोगींहिभक्षणीं ॥ ५४ ॥

हितःप्रतिनिधिर्नित्यंकार्येन्येतंनियोजयेत्
निर्जनत्वंमधुरभुक्जारश्चोरःसदेछति ॥ ५५ ॥
हितप्रतिनिधीनित्यअन्यकामांतयोजिजे ॥ निर्जनत्वागोडखाऊचोरजारहिइछितो । ५५।

सहाय्यंतुबलिद्दिष्टोवेश्याधनिकमित्रतां
कुनृपश्चछलंनित्यंस्वामिद्रव्यंकुसेवकः ॥ ५६ ॥
सहायातेंबलिद्वेषीवेश्याधनिकमित्रते ॥ छलातेंदुष्टनृपतिस्वामिद्रव्याकुसेवक ॥ ५६ ॥

तत्वंतुज्ञानवान्दंभतपोग्निदेवजीवकः
योग्येकांतंचकुलटाजारंवैद्यंचव्याधितः ॥ ५७ ॥
तत्वाज्ञानीदंभअग्नीतपदेवोपजीवक ॥ योगीएकांतशिनळजारावैद्यासरोगिजो ॥ ५७ ॥

धृतपण्योमहर्घत्वंदानशीलंतुयाचकः
रक्षितारंमृगयतेभीतःछिद्रंतुदुर्जनः ॥ ५८ ॥
महर्घतामालवालादात्यातेंतोवियाचक ॥ सोधितोरक्षकाभीतछिद्रातेंतेविदुर्जन ॥ ५८ ॥

चंडायतेविवदतेस्वापित्यश्चातिमादकं
करोतिनिष्फलंकर्ममुर्खोवास्वेष्टनाशनं ॥ ५९ ॥
भांडेवृथाचिडेतेवीनिजेअम्मलजोकरी ॥ करितोनिष्फळाकर्मामूर्खवास्वेष्टनाशन । ५९ ।

तमोगुणाधिकंक्षात्रंब्राह्मंसत्वगुणाधिकं
अन्यद्रजोधिकंतेजस्तेषुसत्वाधिकंवरं ॥ ६० ॥
तमोगुणाधिकक्षत्रीद्विजसत्वगुणाधिक ॥रजोधिकदुजेयांतसत्वाधिक्यअसेवर ॥ ६० ॥

सर्वाधिकोब्राह्मणस्तुजायतेहिस्वकर्मणा
तत्तेजसोनुतेजांसिसंतिचक्षत्रियादिषु ॥ ६१ ॥
सर्वाधिकब्राह्मणतोस्वकर्मानेंचहोतसे ॥ तेजेंन्यूनतयाहूनिअसतीक्षत्रियादिकीं ॥ ६१ ॥

स्वधर्मस्छंब्राह्मणंहिदृष्ट्वाबिभ्यतिचेतरः
क्षत्रियादिनान्यथास्वधर्मंचातःसमाचरेत् ॥ ६२ ॥
स्वधर्मस्छाब्राह्मणातेंभितोपाहूनिदूसरा ॥ क्षत्रियादीअन्यथानस्रासधर्मासआचरी । ६२।

नस्यात्स्वधर्महानिस्तुययावृत्त्याचसावरा
सदेशःप्रवरोयत्रकुटुंबभरणंभवेत् ॥ ६३ ॥

स्वधर्माचीहानिनहोजीणेंतीवृत्तिहोवरा ॥ तोदेशहोवरजिथेंकुटुंबपरिपोषण ॥ ६३ ॥

कृषिस्तुचोत्तमावृत्तिःयासरिन्मातृकामता
मध्यमावैश्यवृत्तिश्चशूद्रवृत्तिस्तुचाधमा ॥ ६४ ॥

किरसानीश्रेष्टवृत्तीपाटाचेंजलहीजसें ॥ वृत्तिमध्यमवाण्याचीअधमाशूद्रवृत्तिजी ॥ ६४ ॥

याञ्चाधमतरावृत्तिर्ह्युत्तमासातपस्विषु
क्वचित्सेवोत्तमावृत्तिर्धर्मशीलनृपस्यच ॥ ६५ ॥

याचनाअगदींनिंद्यतीउत्तमतपास्वितें ॥ कोठेंसेवाश्रेष्टवृत्तिधर्मशीलजरीनृप ॥ ६५ ॥

अध्वर्यवादिकंकर्मकृत्वायोगृह्यतेभृतिः
सकिंमहाधनायैववाणिज्यमलमेवाकिं ॥ ६६ ॥

आध्वर्यवादिवृत्तीनेंघेइजेत्येहिजीभृती ॥ तेणेकायधनीहोयकिंवावाणिज्यवृत्तिनें ॥ ६६ ॥

राजसेवांविनाद्रव्यंविपुलंनैवजायते
राजसेवातिगहनाबुद्धिमद्भिर्विनानसा ॥ ६७ ॥

राजसेवेविनाद्रव्यमिळेपुष्कळनाकधीं ॥ राजसेवातिगहनबुद्धिवानाविनानती ॥ ६७ ॥

कर्तुंशक्याचेतरेणह्यसिधारेवसर्वदा
व्यालग्राहीयथाव्यालंमंत्रीमंत्रबलान्नृपं ॥ ६८ ॥

करूंशक्तिनइतराधारतर्वारिचीजशी ॥ मंत्रीगारोडिसर्पातेंनृपाबुद्धिबळेंतसे ॥ ६८ ॥

करोत्यधीनंतुनृपेभयंबुद्धिमतांमहत्
ब्राह्मतेजोबुद्धिमत्सुक्षात्रराज्ञिप्रतिष्ठितं ॥ ६९ ॥

करीवशनृपाभीतिशहाण्याचीअसेमहा ॥ बुद्धिवानींब्राह्मतेजनृपींक्षात्रअसेस्थित ॥६९॥

आरादेवसदाचास्तितिष्ठन्दूरेपिबुद्धिमान्
बुद्धिपाशैर्बंधयित्वासंताडयतिकर्षति ॥ ७० ॥

आहेजवळजाणावेंदूरहीजरिबुद्धिवान् ॥ बुद्धिपाशेचिबांधोनीओढितोताडितोतसें ॥७०॥

समीपस्थोपिदूरोस्तिह्यप्रत्यक्षसाहायवान्
नानुवाकहताबुद्धिर्व्यवहारक्षमाभवेत् ॥ ७१ ॥
समीपाहीदूरजाणेंस्पष्टजोनसहायहो ॥ अनुवाकेंहीनबुद्धीव्यवहारक्षमानती ॥ ७१ ॥

अनुवाकहतायातुनसासर्वत्रगामिनी
आदौवरंनिर्धनत्वंधनिकत्वमनंतरं ॥ ७२ ॥
अनुवाकेंहीनजीकांसर्वत्रनतिचीगती ॥ आधींबरेंनिर्धनत्वधनिकत्वबरेंमग ॥ ७२ ॥

तथादौपादगमनंयानगत्वमनंतरं
सुखायकल्पतेनित्यंदुःखायविपरीतकं ॥ ७३ ॥
पायांनेंचालणेंआधींसवारीमगतीबरी ॥ सुखावहबहुहोतेंतद्विपर्यासदुःखद ॥ ७३ ॥

वरंहित्वनपत्यत्वंमृतापत्यत्वतःसदा
दुष्टयानात्पादगमोह्यौदासिन्यंविरोधतः ॥ ७४ ॥
बरीअसंततोपूर्वीअपत्यमरणाहुनी ॥ पायींबरेंनदुर्यानींऔदासिन्यविरोधन ॥ ७४ ॥

वरंदेशाच्छादनतश्चर्मणापादगूहनं
ज्ञानलवदौर्विदग्ध्यादज्ञताप्रवरामता ॥ ७५ ॥
बरेंदेशाच्छादनाहून्पायातेंचार्मेंराखणें ॥ जगींकिंचिज्ज्ञतेपेक्षांमूर्खतातीअसेवर ॥ ७५ ॥

परगृहनिवासात्थ्यरण्येनिवसनंवरं
प्रदुष्टभार्यागार्हस्थ्याद्भैक्ष्यंवामरणंवरं ॥ ७६ ॥
परग्रहानिवासाहूनूअरण्यींराहणेंबरें ॥ दुष्टभार्याघरापेक्षांबरीभिक्षाथवामृति ॥ ७६ ॥

श्वमैथुनमृणंगर्भाधानंस्वामित्वमेवच
खलसख्यमपथ्यंतुप्राक्सुखंदुःखनिर्गमं ॥ ७७ ॥
श्वानक्रीडाकर्जगर्भस्वामित्वखलसख्यही ॥ कुपथ्यपूर्वीसुखदशेवटींदुःखकारक ॥ ७७ ॥

कुमंत्रिभिर्नृपोरोगीकुवैद्यैःकुनृपैःप्रजा
कुसंतत्याकुलंचात्माकुबुध्याहीयतेनिशं ॥ ७८ ॥
कुप्रधानेंभूपरोगीकुवैद्येंकुनृपेंप्रजा ॥ कुसंततीनेंकुलहीनिजात्माहीकुबुद्धिनें ॥ ७८ ॥

हस्त्यश्ववृषबालस्त्रीशुकानांशिक्षकोयथा
तथाभवंतितेनित्यंसंसर्गगुणधारकाः ॥ ७९ ॥

हत्तीघोडेबालवृषस्त्रीशुकाजेविशिक्षक ॥ तसेहोताितितेनित्यसंसर्गगुणधारक ॥ ७९ ॥

स्याज्जयोवसरोक्त्यासद्वसनैःसुप्रसिद्धता
सभायांविद्ययामानस्त्रितयंत्वधिकारतः ॥ ८० ॥

जयहोसमयोक्तीनेंसुवस्त्रानेंप्रसिद्धता ॥ सभेंतमानविद्येनेंअधिकारेंतिन्हीनरा ॥ ८० ।

सुभार्यासुसुतचापत्यंसुविद्यासुधनंसुहृत्
सुदासदारुयौसद्देहःसद्बेश्मसुनृपःसदा ॥८१ ॥

सुशीलभार्यासत्पुत्रसुविद्याधनहीसुहृत् ॥ देहअव्याधिसद्दासघरहीसाधुभूपाति ॥ ८१ ।

गृहीणांहिसुखायालंदशैतानिनचान्यथा
वृद्धाःसुशीलाविश्वस्ताःसदाचारास्त्रियोनराः ।८२

गृहस्थालासुखायेग्यदाहाहींअन्यथानतीं ॥ सुशीलवृद्धाविश्वासुसदाचारास्त्रियानर ॥८२ ॥

क्लीबावांतःपुरेयोज्यानयुवामित्रमप्युतः
कालंनियम्यकार्याणिह्याचरेन्नान्यथाक्कचित् ।८३।

क्लीवाअंतःपुरींयोजीमित्रहीनयुवाकधीं ॥ कालनेमूनिकार्यातेंअचरीअन्यथानतीं ॥ ८३॥

गवादिष्वात्मवज्ज्ञानमात्मानंचार्थधर्मयोः
नियुंजीतान्नसंसिध्यैमातरंशिक्षणेगुरुं ॥ ८४ ॥

गवांदिकींस्वसदृशआत्म्यातेंअर्थिधर्मवा ॥ योजावेंअन्नसिद्धीतेंआइतेंशिक्षण्यागुरु॥८४॥

गछेदनियमेनैवसदैवांतःपुरेनरः
भार्यानपत्यासद्यानंभारवाहीसुरक्षकः ॥८५ ॥

जावेंअनेमेंचसदानित्यअंतःपुरींनरें ॥ सद्यानअनपत्यस्त्रीभारवाहकरक्षक ॥ ८५ ॥

परदुःखहराविद्यासेवकश्चनिरालसः
षडैतानिसुखायालंप्रवासेतुनृणांसदा ॥ ८६ ॥

परदुःखहराविद्यानिराळसहिसेवक ॥ सहाहींसुखदेतातिप्रवासांतनरासदा ॥ ८६ ॥

मार्गंनिरुध्यनस्थेयंसमर्थेनापिकर्हिचित्
सद्यानेनापिगच्छेन्नहट्टमार्गेनृपोपीच॥८७
बराहीमार्गरोधूनिसमर्थाहिकधींनर ॥ नजावेंसाधुयानेंहीहाटमार्गेनृपेंकधीं ॥८७॥

ससाहायःसदाचस्यादध्वगोनान्यथाक्कचित्
समीपसन्मार्गजलोभयग्रामेध्वगोवसेत् ॥ ८८ ॥
सहाययुक्तमार्गानेंजावेंनकधियेकटें ॥ मार्गासमीपसजलींदोनगांवांमधींवसे ॥ ८८ ॥

तथाविधेवाविरमेन्नमार्गेविपिनेपिन
अत्यटनंचानशनमतिमैथुनमेवच ॥ ८९ ॥
विरामहितशास्त्छानीमार्गींनविपिनींतसें ॥ नखाणेंफारफिरणेंअतिमैथुनहीतसें ॥ ८९॥

अत्यायासश्चसर्वेषांद्राग्जराकरणंभवेत्
सर्वविद्यास्वनभ्यासोजराकारीकलासुच ॥९०॥
अतिश्रमेंतसेंसर्वांजरासत्वरयेतसे ॥ अनभ्यासेंसर्वविद्याहोतीमलिनत्याकला ॥ ९० ॥

दुर्गुणंतुगुणीकृत्यकीर्तयेत्सप्रियोभवेत्
गुणाधिक्यंकीर्तयतियःकिंस्यान्नपुनःसखा ॥९१॥
दुर्गुणागुणमानूनीवदेतोप्रियहोतसे ॥ गुणाधिकवदेजोकांकसाहोयनतोसखा ॥ ९१ ॥

दुर्गुणंवक्तिसत्येनाप्रियोपिसोप्रियोभवेत्
गुणंहिदुर्गुणीकृत्यवक्तियःस्यात्कथंप्रियः ॥९२॥
स्पष्टदुर्गुणजोबोलेप्रियतोहोयअप्रिय ॥ गुणाकरोनेंअगुणवदेतोप्रियहोकसा ॥ ९२ ॥

स्तुत्यावशंयांतिदेवाह्यंजसाकिंपुनर्नराः
प्रत्यक्षदुर्गुणान्नैववक्तुंशक्नोतिकोप्यतः ॥ ९३ ॥
स्तुतीनेदेववशहोमगतेनकसेनर ॥ प्रत्यक्षदुर्गुणाकोणीवदायानशकेतसें ॥ ९३ ॥

स्वदुर्गुणान्स्वयंचातोविमृशेल्लोकशास्त्रतः
स्वदुर्गुणश्रवणतोयस्तुष्यतिनक्रुध्यति ॥ ९४ ॥
स्वदुर्गुणांलोकशास्त्रेंविचारावेसदोदित ॥ स्वदुर्गुणाएकतांहीतोषेनक्रोधपावतो ॥९४॥

स्वोपहासप्रविज्ञानेयततेत्यजतिश्रुते
स्वगुणःश्रवणान्नित्यंसमस्तिष्ठतिनाधिकः॥ ९५ ॥

स्वोपहासासजाणायायतेऐकेत्यजीतया ॥ ऐकोनियांनिजगुणराहेसमनतोषतो ॥ ९५ ॥

दुर्गुणानांखनिरहंगुणाधानंकथंमयि
मय्येवचाज्ञताप्यस्तिमन्यतेसोधिकोखिलात् ।९६

दुर्गुणांचीखाणमीहीगुणाधाननसेमुळीं ॥ माझ्याठाईंमूर्खत्वहेंमानीअधिकतोअसें । ९६ ।

ससाधुस्तस्य देवाहिकलालेशंलभंतिन
सदाल्पमप्युपकृतंमहत्साधुषुजायते ॥ ९७ ॥

तोचिसाधूदेवत्याचेकलालेशानपावती ॥ थोडकेंहीउपकृतसुनरींत्बहुहोयतें ॥ ९७ ॥

मन्यतेसर्षपादल्पंमहच्चोपकृतंखलः
तथानक्रीडयेत्कैश्चित्कलहायभवेद्यथा ॥ ९८ ॥

मोहोरीहून्अल्पमानीमहाउपकृतखिल ॥ तसेंनकधिंखेळावेंजेणेंकलहहोतसे ॥ ९८ ॥

विनोदेपिशपेन्नैवंतेभार्याकुलटास्तिकिं
अपशब्दाश्चनोवाच्यामित्रभावाश्चकेष्वपि ॥९९ ॥

विमोदेंहीनशापावेंजारिणीस्त्रीतुझीअसें ॥ अपशब्दानबोलावेंकोणाशींमित्रभावेंही । ९९ ।

गोप्यंनगोपयेन्मित्रेतद्गोप्यंनप्रकाशयेत्
वैरीभुतोपिपश्चात्प्राक्कथितंवापिसर्वदा ॥ १०० ॥

नगोप्यागोपिजेमित्रींतद्गोप्यानप्रकाशिजे ॥ वैरताहीपुढेंहोतांपूर्वोक्तनवदेकधीं ।१०० ।

विज्ञातमपियद्दौष्ट्यंदर्शयेत्तन्नकर्हिचित्
प्रतिकर्तुंयतेतैवगुप्तःकुर्यात्प्रतिक्रियां ॥ १ ॥

दुष्टत्वातेंजाणतांहीदाखवीनतयाकधीं ॥ प्रतिकारार्थयतुनीकारिजावाचानिश्चयें ॥ १ ॥

यथार्थमपिनब्रूयाद्बलवाद्विपरीतकं
दृष्टंत्वदृष्टवत्कुर्यात्श्रुतमप्यश्रुतंक्वचित् ॥ २ ॥

खरेंहीनवदावेंतेंबलवंताविरोधिजे ॥ अदृष्टसेंकरीदृष्टाश्रुतहीअश्रुतासम ॥ २ ॥

मूकोंधोबधिरःखंजोस्वापत्कालेभवेन्नरः
अन्यथादुःखमान्योतिहीयतेव्यवहारतः ॥ ३ ॥
मूकांधपंगुबहिराहोईजेविपदींनरें ॥ अन्यथापावतोदुःखाव्यवहारींहिहीनता ॥ ३ ॥

वदेद्वृद्धानुकूलंयन्नबालसदृशंक्वचित्
परवेश्मगतस्तत्स्त्रीवीक्षणंनचकारयेत् ॥ ४ ॥
अनुकूलवदेवृद्धाबालासमकधींनतें ॥ असतांअन्यगेहांततत्स्त्रीतेंनबघेकधीं ॥ ४ ॥

अधनादननुज्ञातान्न गृण्हीयात्तुस्वाहिना
स्वशिशुंशिक्षयेदन्याशिशुंन्नाप्यपराधिनं ॥५ ॥
दरिद्रीमूर्खयाहूनिनध्यावेंस्वामिनेंकधीं ॥ स्वबाळाशिक्षिजेअन्यबाळानअपराधिही ॥५ ॥

अधर्मानिरतोयस्तुनीतिहीनच्छलांतरः
संकर्षकोतिदंडीतद्ग्रामंत्यक्त्वान्यतोवसेत् ॥६ ॥
अधर्मीरतजोनीतिहीनअंतरिंजाछळ ॥ लोभीअतीदंडियाचागांवसोडुनिराहिजे ॥ ६॥

यथार्थमपिविज्ञातमुभयोर्वादिनोर्मतं
अनियुक्तेनवैब्रूयाद्भिनशत्रुर्भवेदतः ॥ ७ ॥
यथार्थजाणतांहीतेंदोघांचेंवादिचेंमत ॥ नृपाज्ञेंवीणनवदेहरेतोशत्रुहोतसे ॥ ७ ॥

गृहीत्वान्यविवादंतुविवदेन्नैवकेनचित्
मिलित्वासंघशोराजमंत्रंनैवतुतर्कयेत् ॥ ८ ॥
दुजाचावादघेउनिकोणाशींहीनभांडिजे ॥ मिळोनबहुभूपाचेमसलतीलानताकिंजे ॥८ ॥

अज्ञातशास्त्रोनब्रूयाज्जोतिषंधर्मनिर्णयं
नीतिदंडंचिकित्सांचप्रायश्चित्तंक्रियाफलं ॥९ ॥
नशास्त्रजाणतांसांगेनधर्मांज्योतिषातसें ॥नीतीदंडाचिकित्छेतेंप्रायाश्चित्ताक्रियाफळा ॥९॥

पारतंत्र्यात्परंदुखंनस्वातंत्र्यात्परंसुखं
अप्रवासीगृहीनित्यंस्वतंत्रःसुखमेधते ॥ १० ॥
पारतंत्रादुःखफारस्वतंत्रत्वबहू सुख ॥ अप्रवासीघरींनित्यस्वतंत्रसुखपावतो ॥ १० ॥

नूतनप्राक्तनानांचव्यवहारविदांधिया
प्रतिक्षणंचाभिनवोव्यवहारोभवेदतः ॥ ११॥

जुन्यानवीनवस्तूंचेंव्यवहारिकबुद्धिनें ॥ प्रतिक्षणीनवनवाव्यवहारहिहोतसे ॥ ११॥

वक्तुंनशक्यतेप्रायःप्रत्यक्षादनुमानतः
उपमानेनतज्ज्ञानंभवेदाप्तोपदेशतः ॥ १२॥

बहुधासांगतांनायेप्रत्यक्षेंअनुमानिंही ॥ तत्ज्ञानउपमेनेंवाआप्ताच्याउपदेशिंवा ॥ १२ ॥

कथितंतुसमासेनसामान्यंनृपराष्ट्रयोः
नीतिशास्त्रहितायालंयद्विशिष्टंनृपेस्मृतं ॥ १३॥

समासेंकथिलेंभूपप्रजासामान्यसर्वही ॥ नीतिशास्त्रहितायोग्यअधीकनृपतींसतें ॥ १३॥
तिसन्याचीसमश्लोकीवासुदेवात्मजेंकृत ॥ श्रीगजाननपादाब्जींयथामतिसमर्पिली

---

श्री

# शुक्रनीति

(प्राकृतसमश्लोकीसह)

## अध्याय ४ था.

अथमिश्रप्रकरणंप्रवक्ष्यामिसमासतः
लक्षणंसुहृदादीनांसमासाच्छृणुताधुना ॥१॥

आतांमिश्रप्रकरणासंक्षेपेंकरुनींवदे ॥ लक्षणासुहृदादींचेऐकानिश्चलमानसें ॥१॥

मित्रःशत्रुश्चतुर्धास्यादुपकारापकारयोः
कर्ताकारयिताचानुमतायश्चसाहायकः ॥२॥

चतुर्धामित्रहीशत्रुउपकारापकारिंही ॥ कर्ताकरवितातेवींसहायअनुमोदक ॥२॥

यस्यसुद्रवतेचित्तंपरदुःखेनसर्वदा
इष्टार्थैंयततेन्यस्याप्रेरितःसत्करोतियः ॥३॥

जयाचेंसुद्रवेचित्तपराचेदुःखिंसर्वदा ॥ यतेहितार्थअन्याच्याप्रेरिल्यावीणहीकरी ॥३॥

आत्मस्त्रीधनगुह्यानांशरणंसमयेसुहृत्
प्रोक्तोत्तमोयमन्यश्चद्वित्र्येकपदामित्रकः ॥४॥

जीवस्त्रीधनगुह्यांचासमयींराक्षितासुहृत् ॥ तोउत्तमदुजेदोनतीनवापादमित्रते ॥४॥

अनन्यस्वत्वकामत्वमेकास्मिन्विषयेद्वयोः
वैरिलक्षणमेतद्वान्येष्टनाशनकारिता ॥५॥

एकाचविषयावरतींदोहोंचीबहुलालसा ॥ वैराचेंचिन्हहेंदूजेंदुजाचाइष्टभंगही ॥५॥

भ्रातृभावेपितुर्द्रव्यमखिलंममवैभवेत्
नस्यादेतस्यवश्येयंममैवस्यात्परस्परं ॥६॥

बंधुभावींपितृद्रव्यासर्वहीमजलामिळो ॥ दुज्यातेंहीवश्यवहोमिळाएसेंपरस्पर ॥ ६ ।

भोक्ष्येखिलमहंचैतद्विनान्यस्तस्तुवैरिणौ
द्वेष्टिद्विष्टउभौशत्रूस्तश्चैकतरसंज्ञकौ ॥ ७ ॥
अन्याविनांमीभोगीननदुजादोन्हिवैरिते ॥ द्वेषकितद्वेषशत्रूहोएकतरसंज्ञक ॥ ७ ॥

शूरस्योत्थानशीलस्यबलनीतिमतःसदा
सर्वेमित्रागूढवैरान्नृपाःकालप्रतीक्षकाः ॥ ८ ॥
उठावणीशीलशूरबलवान्नीतिमान्सदा ॥ त्यासर्वमित्रतेगुप्तवैरीसमयपाहते ॥ ८ ॥

भवंतीतिकिमाश्चर्यैराज्यलुब्धानतेहिकिं
नराज्ञोविद्यतेमित्रंराजामित्रंनकस्यवै ॥ ९ ॥
कायआश्चर्यकींहोतीराज्यलोभनकींतयां । कोणीनामित्रभूपांचाकोणाचाभूपतीनतो ॥९॥

प्रायःकृत्रिममित्रेतेभवतश्चपरस्परं
केचित्स्वभावतोमित्राःशत्रवःसंतिसर्वदा ॥ १० ॥
बहुधाकृत्रिमेमित्रहोतातीतेपरस्पर ॥ स्वभावेंमित्रतेकोणीअसतीशत्रुसर्वदा ॥ १० ॥

मातामातृकुलंचैवपितातात्पितरौतथा
पितृपितृव्यात्मकन्यापत्नीतत्कुलमेवच ॥ ११
मातातेवीमातृकुलपितातात्पितृहीतसे ॥ बापाचेचुलतेकन्यास्त्रीतिचेंकुलहीतसें ॥ ११ ॥

पितृमात्रात्मभगिनीकन्यकासंततिश्चया
प्रजापालोगुरुश्चैवमित्राणिसहजानिहि ॥ १२ ॥
पित्याचीआइचीस्वीयकन्येचीसंततीहिजी ॥ प्रजापालतेविगुरुमित्रहेसहजात्मक ॥१२॥

विद्याशौर्यंचदाक्ष्यंचबलंधैर्यंचपंचमं
मित्राणिसहजान्याहुवर्तयंतिहितैर्बुधाः ॥ १३ ॥
विद्याशूरत्वदक्षत्वबलधैर्यहिपांचवें ॥ सहजाभिधहेमित्रवागतातितयांबुध ॥ १३ ॥

स्वभावतोभवंत्येतेहिंस्त्रोदुर्वृत्तएवच
ऋणकारीपिताशत्रुर्मातास्त्रीव्यभिचारिणी ॥१४॥
स्वभावानेंचहेहोतीहिंसाशीलकवृत्तही ॥ कर्जकर्तापिताशत्रुआईस्त्रीव्यभिचारिणी ॥१४॥

आत्मपितृभ्रातरश्चतत्स्त्रीपुत्राश्चशत्रवः
स्नुषाश्वश्रूःसपत्नीचननांदायातरस्तथा ॥ १५ ॥
बापाचेआपलेभाऊशत्रुत्यांच्याहिबायका ॥ सुनासासूसवतिहीनणंदाजावापरस्पर ॥ १५ ॥

मूर्खःपुत्रःकुवैद्यश्चारक्षकस्तुपिताप्रभुः
चंडोभवेत्प्रजाशत्रुरदाताधनिकश्चयः ॥ १६ ॥
पुत्रहीमूर्खदुर्वैद्यअरक्षकपिताप्रभू ॥ कोपीहोतोप्रजाशत्रुअदाताहीधनीतसा ॥ १६ ॥

आसमंताच्चतुर्दिक्षुसन्निकृष्टाश्चयेनृपाः
तत्परास्तत्परायेन्येक्रमाद्धीनबलारयः ॥ १७ ॥
चारीदिशेचारिबाजूशत्रूजवाळिचेनृप ॥ पुढेंत्याचेपुढेंअन्यक्रमेंहीनबलेंहरी ॥ १७ ॥

शत्रूदासीनमित्राणिक्रमात्तेस्युस्तुप्राकृताः
अरिर्मित्रमुदासीनोनंतरस्तत्परस्परं ॥ १८ ॥
शत्रूउदासीनामित्रक्रमेंप्राकृतसंज्ञक ॥ अरिमित्रउदासीनअनंतरपुढेंपुढें ॥ १८ ॥

क्रमशोवातथाज्ञेयाश्चतुर्दिक्षुतथारयः
स्वसमीपतराभृत्याह्यमात्याद्याश्चकीर्तिताः ॥ १९ ॥
क्रमेंतसेंवाजाणावेंशत्रूचारीदिशेतसे ॥ अत्यंतनिकटींभृत्यप्रधानादिकवोलिले ॥ १९ ॥

बृंहयेत्कर्षयेन्मित्रंहीनाधिकबलंक्रमात्
भेदनीयाःपिडनीयाःकर्षणीयाश्चशत्रवः ॥ २० ॥
वाढवीघटवीमित्राहीनाधिकवळेंक्रमें ॥ फितुरानेंहिपीडेनेंकर्षिजावेंचिशत्रुतें ॥ २० ॥

विनाशनीयास्तेसर्वेसामादिभिरुपक्रमैः
मित्रशत्रूयथायोग्यैःकुर्यात्स्ववशवर्तिनं ॥ २१ ॥
विनाशिजेतयासर्वांसामादिकउपक्रमें ॥ मित्रशत्रुयथायोग्येंकरावेंवशयांसदा ॥ २१ ॥

उपायेनयथाव्यालोगजःसिंहोपिसाध्यते
भूमिष्ठाःस्वर्गमायांतिवज्रभिदत्युपायतः ॥ २२ ॥
उपायेंजेविसर्पातेंगजासिंव्हाससाधिती ॥ भूगतस्वर्गाजातीउपायेंवज्रभेदिती ॥ २२ ॥

सुहृत्संबंधिस्त्रीपुत्रप्रजाशत्रुषुतेपृथक्
सामदानभेददंडाश्चिंतनीयाःस्वयुक्तिभिः ॥ २३ ॥

सुहृत्संबंधिस्त्रीपुत्रप्रजाशत्रुशिंवेगळे ॥ सामदानादंडभेदाचिंतिजावेंस्वयुक्तिनें ॥ २३ ॥

एकशीलवयाविद्याजातिव्यसनवृत्ततः
साहचर्यान्भवेन्मित्रमेभिर्यदितुसार्जवैः ॥ २४ ॥

एकावस्थाशीलविद्याजातिव्यसनवृत्तिनें ॥ सहवासेंहोयामित्रयाहींआर्जवयुक्तिनें ॥ २४ ॥

त्वत्समस्तुसखानास्तिमित्रेसाममिमंस्मृतं
ममसर्वंतवैवास्तिदानंमित्रेसजीवितं ॥ २५ ॥

तुझ्यासमसखानाहींमित्रींहेंसामजाणिजे ॥ माझेंसर्वतुझेंजाणेंमित्रादानसजीवित ॥ २५ ॥

मित्रेन्यामित्रसुगुणान्कीर्तयेद्भेदनंहितत्
मित्रेदंडोनाकरिष्येमैत्रीमेवंविधोसिचेत् ॥ २६ ॥

अन्यमित्रगुणांमित्रींसांगिजेहेंचिभेदन॥ मित्रींदंडतुझीमैत्रनिठेवींवागतांअसें ॥ २६ ॥

योनसंयोजयेदिष्टमन्यानिष्टमुपेक्षते
उदासीनःसनकथंभवेच्छत्रुःसुसांधिकः ॥ २७ ॥

योजीनजोहितअन्यआनिष्टातेंउपेक्षितो नकसाजोउदासीनहोयशत्रुसुसांधिक ॥ २७ ॥

परस्परमनिष्टंनचिंतनीयंत्वयामया
सुसहाय्यंहिकर्तव्यंशत्रौसामप्रकीर्तितं ॥ २८ ॥

परस्परअनिष्टानाचिंतिजावेंतुह्मींमिही ॥करिजावेंसहाय्यत्वशत्रूशींसामहेंअसें ॥ २८ ॥

करैर्वाप्रमितैर्ग्रामैर्वत्सरेप्रबलंरिपुं
तोषयेत्तद्धिदानंस्याद्यथायोग्येषुशत्रुषु ॥ २९ ॥

करेंवागांवमानेंवावर्षींप्रबलशत्रुतें ॥ तोषिजावेंहितेंदानेंयथायोग्यहिशत्रुशीं ॥ २९ ॥

शत्रुसाधकहीनत्वकरणात्प्रबलाश्रयात्
तद्धीनतोज्जीवनाच्चशत्रुभेदनमुच्यते ॥ ३० ॥

शत्रुतेंसाधकेंहीनकरणेंप्रबलाश्रयें ॥तद्धीना [illegible] ॥ ३० ॥

दस्युभिःपीडनंशत्रोःकर्षणंधनधान्यतः
तच्छिद्रदर्शनादुग्रबलैर्नीत्याप्रभीषणं ॥ ३१ ॥
पीडीचोरांहातिशत्रुधनधान्यासनेउनी ॥ तयाछिद्रेंउग्रबलेंभिववीनीतिनेंतसें ॥ ३१ ॥

प्राप्तयुद्धानिवर्तित्वैस्त्रासनंदंडउच्यते
क्रियाभेदादुपायाहिभिद्यंतेचयथार्हतः ॥ ३२ ॥
युद्धींशूरत्वयोगानेंत्रासिणेंदंडजाणिजे ॥ उपायहीक्रियाभेदेंभिन्नयोग्यजसेतसे ॥ ३२ ॥

सर्वोपायैस्तथाकुर्यान्नीतिज्ञःपृथिवीपतिः
यथास्वाभ्याधिकानस्युर्मित्रोदासीनशत्रवः ॥ ३३ ॥
करीसर्वोपायितसेंनीतिमान्पृथिवीपति ॥ जसेअधीकस्वाहूनीमित्रोदासीनशत्रुन ॥ ३३ ॥

सामैवप्रथमंश्रेष्ठंदानंतुतदनंतरं
सर्वदाभेदनंशत्रोर्दंडणंप्राणसंशये ॥ ३४ ॥
पूर्वीअसेसाममुख्यतदनंतरदानतें ॥ सर्वदाभेदशत्रूंशिदंडशेवटिंसंकटीं ॥ ३४ ॥

प्रबलेरौसामदानैःसामभेदौधिकेस्मृतौ
भेददंडौसमेकार्यौदंडःपूज्यःप्रहीनके ॥ ३५ ॥
बलीशत्रूसामदानेंअधिकींसामभेदते ॥ तुल्याकरीभेददंडादंडाहीनावरीकरी ॥ ३५ ॥

मित्रेचसामदानौस्तोनकदाभेददंडने
रिपोःप्रजानांसंभेदपीडनंस्वजयायवै ॥ ३६ ॥
मित्रींकरीसामदानानकधींभेददंडना ॥ रिपूचेंहिप्रजेचेंहीस्वजयाभेददंडन ॥ ३६ ॥

रिपुप्रपीडितानांचसाम्नादानेनसंग्रहः
गुणवतांचदुष्टानांहितंनिर्वासनंसदा ॥ ३७ ॥
रिपुनींपिडितांरक्षिसामदानेंकरूनियां ॥ गुणवानाहिजेदुष्टतयांतेंकाढणेंहित ॥ ३७ ॥

स्वप्रजानांनभेदेननैवदंडेनपालनं
कुर्वीतसामदानाभ्यांसर्वदायत्नमास्थितः ॥ ३८ ॥
स्वप्रजेचेंन [illegible] ॥ ३८ ॥

स्वप्रजादंडभेदैश्चभवेद्राज्यविनाशनं
हीनाधिकायथानस्युःसदारक्ष्यास्तथाप्रजाः।३९।
स्वप्रजेच्यादंडभेदेंहोयराज्यविनाशन ॥ हीनाधिकजशानाहोंरािक्षजाव्यातशाप्रजा॥३९॥

निवृत्तिरसदाचाराद्दमनंदंडतश्चतत्
येनसंदम्यतेजंतुरुपायोदंडएवसः ॥ ४० ॥
अनाचाराहुनीफिर्णेंदंडेंदमनहीतसें ॥ दमिजेतोप्राणिजेणेंतोउपायाचिदंडहो ॥४० ॥

सउपायोनृपाधीनःससर्वेषांप्रभुर्यतः
निर्भत्सनंचापमानोनाशनंबंधनंतथा ॥ ४१ ॥
सोंउपायनृपाधीनसर्वांचाप्रभुतोह्मणून् ॥ अपमानाहिधिःकारनखाणेंतेविबंधन ॥ ४१ ॥

ताडनंद्रव्यहरणंपुरान्निर्वासनांकने
व्यस्तक्षौरमसद्यानमंगछेदोवधस्तथा ॥ ४२ ॥
मारणेंद्रव्यहरणेंकाढणेंडागणेंतसें ॥ खरींस्वारीकोंशिपाटअंगछेदतसावध ॥ ४२ ॥

युद्धमेतेह्युपायास्युर्दंडस्यैवप्रभेदकाः
जायतेधर्मनिरताप्रजादंडभयेनच ॥ ४३ ॥
उपायसर्वयुद्धांतदंडाचेभेदजाणिजे ॥ होतसेधर्मिनिरतप्रजादंडभयेंसदा ॥ ४३ ॥

करोत्याधर्षणंनैवतथाचासत्यभाषणं
क्रूराश्चमार्दवंयांतिदुष्टादौष्ट्यंत्यजंतिच ॥ ४४ ॥
जबरीनकरीकोणीखोटेंभाषणहीतसें ॥ मृदुत्वापावतीक्रूरदुष्टत्वादुष्टाकिती ॥ ४४ ॥

पशवोपिवशंयांतिविद्रवंतिचदस्यवः
पिशुनामूकतांयांतिभयंयांत्याततायिनः ॥ ४५ ॥
पशुहीवशहोतातिपळतीचोरसर्वही ॥ चाहाडहमुकेहोतीभितातीआततायिजे ॥ ४५ ॥

करदाश्चभवंत्यन्येवित्रासंयांतिचापरे
अतोदंडधरोनित्यंस्यान्नृपोधर्मरक्षणे ॥ ४६ ॥
होतीकरदभूपालत्रासपावातिशत्रुही ॥ यादंडधरहोनित्यभूपतीधर्मरक्षणीं ॥ ४६ ॥

गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः

उत्पथप्रतिपन्नस्यकार्यंभवतिशासनं ॥४७॥

गुरुहिजेगर्वशीलकार्याकार्यनजाणता ॥ कुमार्गेवागतोत्यातेंकरिजेभूपिंशासन ॥४७॥

राज्ञांसदंडनीत्याहिसर्वेसिध्यंत्युपक्रमाः

दंडएवहिधर्माणांशरणंपरमंस्मृतं ॥४८॥

राजाचेदंडनीतीनेंसर्वसिद्धउपक्रम ॥ दंडचीएकधर्माचिरक्षासाधनबोलिलें ॥ ४८ ॥

अहिंसैवासाधुहिंसापशुवच्छ्रुतिचोदनात्

दंडयस्यादंडनानित्यमदंडयस्यचदंडनात् ॥४९॥

दुष्टहिंसानतीहिंसापशुसीश्रुतिबोधनें ॥ दंडयोग्याअदंडानेंअयोग्यालागिंदंडनें ॥ ४९ ॥

अतिदंडाच्चगुणिभिस्त्यज्यतेपातकीभवेत्

अल्पदानान्महत्पुण्यंदंडप्रणयनात्फलं ॥५०॥

तेवीअत्यंतदंडानेंटाकितीनरपागुणी ॥ अल्पदानेंमहापुण्यदंडयोगेंतसेंफल ॥ ५० ॥

शास्त्रेषूक्तामुनिवरैःप्रवृत्त्यर्थंभयायच

अश्वमेधादिभिःपुण्यंतत्किंस्यात्स्तोत्रपाठतः॥५१॥

उक्तशास्त्रींमुनिवरींप्रवृत्त्यर्थभयार्थही ॥ जेंपुण्यअश्वमेधादिस्तोत्रपाठेंहितेंकसें ॥ ५१ ॥

क्षमयायतुपुण्यंस्यात्तत्किंदंडनिपातनात्

स्वप्रजादंडनाछ्रेयःकथंराज्ञोभविष्यति ॥५२॥

क्षमेनेंजेंपुण्यहोयतेंकसेंदंडनींघडे ॥ स्वप्रजादंडमेंश्रेयकसेंभूपासहोयतें ॥५२॥

तद्दंडाज्जायतेकीर्तिर्धनपुण्यविनाशनं

नृपस्यधर्मपूर्णत्वाद्दंडःकृतयुगेनहि ॥५३॥

तिच्यादंडेंअकीर्तीहोधनपुण्यविनाशन ॥ नृपसद्धर्मपूर्णत्वेंकृतींदंडयुगींनसे ॥ ५३ ॥

त्रेतायुगेपूर्णदंडःपादाधर्माप्रजायतः

द्वापरेचार्धधर्मत्वात्त्रिपाद्दंडोविधीयते ॥ ५४ ॥

त्रेतायुगींपूर्णदंडजशीधार्मिकतीप्रजा ॥ द्वापरींअर्धधर्मत्वेंत्रिपाद्दंडाकरीनृप ॥ ५४ ॥

प्रजानिस्वाराजदौष्टयाद्दंडार्धंतुकलैायुगे
युगप्रवर्तकोराजाधर्माधर्मप्राशिक्षणात् ॥ ५५ ॥
प्रजादरिद्रीदुर्भूपेंअर्धादंडकलीमधें ॥ प्रवर्तकयुगाराजाधर्माधर्मासशिक्षणें ॥ ५५ ।

युगानांनप्रजानांनदोषःकिंतुनृपस्यहि
प्रसन्नोयेननृपातिस्तदाचरातिवैजनः ॥ ५६ ॥
युगाचानप्रजेचानदोषभूपातिचाअसे ॥ प्रसन्नहोभूपजेणेंतयाआचारितीजन ॥ ५६ ॥

लोभाद्भयाच्चकिंतेनशिक्षितंनाचरेत्कथं
सुपुण्योयत्रनृपातिर्धर्मिष्टास्तत्रहिप्रजाः ॥ ५७ ॥
लोभेंभयेंहीनकसेतयानेंबोधितांकरी ॥ पुण्यशीलजियेंभूपप्रजाधर्मीतियेंरत ॥ ५७ ॥

महापापीयत्रराजातत्राधर्मपरोजनः
नकालवर्षीपर्जन्यस्तत्रभूर्नमहाफला ॥ ५८ ॥
माहापापीजियेंराजाअधर्मरतलोकही ॥ काळींपर्जन्यनपडेभूमीधान्यनपुष्कळ ॥ ५८ ॥

जायतेराष्ट्रव्हासश्चशत्रुवृद्धिर्धनक्षयः
सुराप्यपिवरोराजानस्त्रैणोनातिकोपवान् ॥ ५९ ॥
राष्ट्राचाव्हासतोहोईशत्रुवृद्धिधनक्षय ॥ मद्यपीहीबराराजानकोपीअतिजारजो ॥ ५९ ॥

लोकान्चंडस्तापयातिस्त्रैणोवर्णान्विलुंपति
मद्यप्येकश्चभ्रष्टस्याद्बुध्याचव्यवहारतः ॥ ६० ॥
लोकातापवितोचंडजरीसंकरहोतसे ॥ मद्यपीयेकहोभ्रष्टबुद्धीनेंव्यवहारिंही ॥ ६० ॥

कामक्रोधौमद्यतमौसर्वमद्याधिकौयतः
धनप्राणहरोराजाप्रजायाश्चतिलोभतः ॥ ६१ ॥
कामक्रोधमहामद्यसर्वमद्यांतमुख्यहें ॥ धनाप्राणाहरीराजाप्रजेचेबहुलोभितो ॥ ६१ ॥

तस्मादेतत्रयंत्यक्त्वादंडधारीभवेन्नृपः
अंतर्मृदुर्बहिःक्रूरोभूत्वास्वांदंडयेत्प्रजां ॥ ६२ ॥
म्हणोनिहींतीनटाकोन्हावेंदंडधरेंनृपें ॥ मृदुआंतवरीक्रूरहोउनीदंडिजेप्रजे ॥ ६२ ॥

अत्युग्रदंडकल्पस्यात्स्वभावाहितकारिणः
राष्ट्रंकर्णेजपैर्नित्यंहन्यतेचस्वभावतः ॥ ६३ ॥

अत्युग्रदंडाकरिजेस्वभावेंअहितासदा ॥ चाहाडानींनित्यराष्ट्रस्वभावेंनाशिजेंवळें ॥ ६३ ॥

अतोनृपःसूचितोपिविमृशेत्कार्यमादरात्
आत्मनश्चप्रजायाश्चदोषदर्श्युत्तमोनृपः ॥ ६४ ॥

सुचवीताहिभूपालविचारीकार्यआदरें ॥ प्रजेच्याआपल्यादोषापाहेतोनृपउत्तम ॥ ६४ ॥

विनियच्छतिचात्मानमादौभृत्यांस्ततःप्रजाः
कायिकोवाचिकोमानसिकःसांसर्गिकस्तथा ॥ ६५ ॥

आधीनमविआत्म्यातेंसेवकांमगतीप्रजा। दैहिकावाचिकामानसिकासांसर्गिकातसें ॥ ६५ ॥

चतुर्विधोपराधःसबुध्यबुद्धिकृतोद्विधा
पुनर्द्विधाकारितश्चतथाज्ञेयोनुमोदितः ॥ ६६ ॥

अपराधचतुर्धाहोबुध्यावासहजद्विधा ॥ पुन्हाद्विधाकारिततोअनुमोदितहीतसा ॥ ६६ ॥

सकृदसकृदभ्यस्तःस्वभावैःसचतुर्विधः
नेत्रवक्त्रविकाराद्यैर्भावैर्मानासिकंतथा ॥ ६७ ॥

येकदावेळवेळांवास्वभावेंहेंचतुर्विध ॥ नेत्रवक्त्रविकारादिभावेंमानासिकावदा ॥ ६७ ॥

क्रिययाकायिकंवीक्ष्यवाचिकंक्रूरशब्दतः
सांसर्गिकंसाहचर्यैर्ज्ञात्वागौरवलाघवं ॥ ६८ ॥

क्रियेनेंकायिकाजाणेंक्रूरशब्देंहिवाचिका ॥ सांसर्गिकासाहचर्येजाणुनीगुरुलाघव ॥ ६८ ॥

उत्पन्नोत्पत्स्यमानानांकार्याणांदंडमावहेत्
प्रथमंसाहसंकुर्वन्नुत्तमोदंडमर्हति ॥ ६९ ॥

वर्तमानाहिहोणारकार्यातेंदंडयोजिजे ॥ पहिलेसाहसाहवेळींउत्तमायोग्यदंडहा ॥ ६९ ॥

न्याय्यंकिमितिसंपृच्छेत्तवैवेयमसत्कृतिं
उपहासंयथोक्तंचाद्विगुणांत्रिगुणंततः ॥ ७० ॥

हेंन्याय्यकींपुसेऐसेंतुझीकाहींअसत्कृति ॥ उपहासयथायोग्याद्विगुणात्रिगुणाहिवा ॥ ७० ॥

मध्यमंसाहसंकुर्वन्नुत्तमोदंडमर्हति
धिग्दंडंप्रथमंचाद्यसाहसंतदनंतरं ॥ ७१ ॥

मध्यमासाहसावेळींउत्तमादंडयोग्यहा ॥ धिक्कारपूर्वींमगतोआद्यसाहसदंडहीं ॥ ७१ ॥

यथोक्तंतुतथासम्यग्यथावृद्धिह्यनंतरं
उत्तमंसाहसंकुर्वन्नुत्तमोदंडमर्हति ॥ ७२ ॥

यथायोग्याकरीदंडाफिरूनीवृद्धिनेकरी ॥ उत्तमासाहसावेळींउत्तमादंडयोग्यतो ॥७२॥

प्रथमंसाहसंचादौमध्यमंतदनंतरं
यथोक्तंद्विगुणंपश्चादवरोधंततःपरं ॥ ७३ ॥

पूर्वसाहसतेंआधींमध्यमातदनंतर ॥ योग्यामगाद्विगुणहीअवरोधाकरीमग ॥ ७३ ॥

बुद्धिपूर्वंनृघातेनविनैतद्दंडकल्पनं
उत्तमत्वंमध्यमत्वंनीचत्वंचात्रकीर्त्यते ॥ ७४ ॥

बुद्धिपूर्वखुनाहूनीविनाहेंदंडकल्पणें ॥ उत्तमत्वामध्यमत्वानीचत्वासांगिजेइथें ॥ ७४ ॥

गुणेनैवतुमुख्यंहिकुलेनापिधनेनच
प्रथमंसाहसंकुर्वन्मध्यमोदंडमर्हति ॥ ७५ ॥

गुणांनीमुख्यताकिंवाकुलानेंवाधनेंतशी ॥ पहिल्यासाहसावेळींमध्यमादंडयोग्यहा॥७५॥

धिग्दंडमर्धदंडंचपूर्णदंडमनुक्रमात्
द्विगुणंत्रिगुणंपश्चात्संरोधंनीचकर्मच ॥ ७६ ॥

धिक्कारअरधादंडपूर्णदंडअनुक्रमें ॥ द्विगुणावात्रिगुणहीकैदेतेंनीचकामही ॥ ७६ ॥

मध्यमंसाहसंकुर्वन्मध्यमोदंडमर्हति
अर्धंयथोक्तंद्विगुणंत्रिगुणंबंधनंततः ॥ ७७ ॥

मध्यमासाहसावेळींमध्यमादंडयोग्यतो ॥ अर्धायथोक्ताद्विगुणात्रिगुणामगबंधना ॥७७॥

मध्यमंसाहसंकुर्वन्नधमोदंडमर्हति
पूर्वसाहसमादौतुयथोक्तंद्विगुणंततः ॥ ७८ ॥

मध्यमासाहसावेळींअधमादंड[illegible] ॥ पूर्वसाह[illegible] ॥ ७८ ॥

उत्तमंसाहसंकुर्वन्मध्यमोदंडमर्हति
मध्यमंसाहसंचादौयथोक्तंतदनंतरं ॥ ७९ ॥
उत्तमासाहसावेळींमध्यमादंडयोग्यतो ॥ मध्यमासाहसाआधींयथोक्तातदनंतर ॥ ७९ ॥

द्विगुणंत्रिगुणंपश्चाद्यावज्जीवंतुबंधनं
प्रथमंसाहसंकुर्वन्नधमोदंडमर्हति ॥ ८० ॥
द्विगुणेतिप्पटमगयावदायुष्यकैदही ॥ प्रथमासाहसावेळींअधमादंडयोग्यहा ॥ ८० ॥

ततःसंरोधनंनित्यंमार्गसंस्करणार्थकं
उत्तमंसाहसंकुर्वन्नधमोदंडमर्हति ॥ ८१ ॥
बंदिखानानित्यमगसडकेचीमरामत ॥ उत्तमासाहसावेळींअधमादंडयोग्यहा ॥ ८१ ॥

मध्यमंसाहसंचादौयथोक्तंद्विगुणंततः
यावज्जीवंबंधनंचनीचकर्मैवकेवलं ॥ ८२ ॥
मध्यमासाहसापूर्वींयथोक्ताद्विगुणामग ॥ कैदयावज्जीवतयानींचकर्मचिकेवळ ॥ ८२ ॥

हरेत्पादंधनात्तस्ययःकुर्याद्धनगर्वतः
पूर्वंततोर्धमखिलंयावज्जीवंतुबंधनं ॥ ८३ ॥
चवथायीहरीद्रव्याधनगर्वेंकरीलजो ॥ पूर्वीपुन्हाअर्धसर्वयावज्जीवहिबंधन ॥ ८३ ॥

सहायगौरवाद्विद्यामदाच्चबलदर्पतः
पापंकरोतियस्तंतुबंधयेत्ताडयेत्सदा ॥ ८४ ॥
सहायजोरेंवाविद्यामदानेंवाबळेंतसें ॥ पापाकरीलजोत्यातेंबांधिजेताडिजेसदा ॥ ८४ ॥

भार्यापुत्रश्चभगिनीशिष्योदासस्नुषानुजः
कृतापराधास्ताड्यास्तेतनुरज्जुसुवेणुभिः। ८५ ।
सुतभार्याबहिणहीशिष्यदासस्नुषानुज ॥ अपराधेंचिताडावेछडीवादोरिबारिक ॥ ८५ ॥

पृष्ठतस्तुशरीरस्यनोत्तमांगेकथंचन
अतोन्यथातुप्रहरंश्चोरवद्दंडमर्हति ॥ ८६ ॥
पृष्टभागींशरीराचेउ[illegible] ॥ [illegible] ॥ ८६ ॥

नीचकर्मकरंकुर्याद्बंधयित्वातुपापिनं
मासमात्रंत्रिमासंवाषण्मासंवापिवत्सरं ॥ ८७ ॥

नीचकर्मकरूंयोजीनरापाप्यासबांधिजे ॥ महिनातीनवामाहिनेसाहामासाहिवत्सर ॥ ८७ ॥

यावज्जीवंतुवाकश्चिन्नकश्चिद्वधमर्हति
नाहिंस्याद्भूतानित्विति जागर्तिवैश्रुतिः ॥ ८८ ॥

कैदयावज्जीवकोणानकोर्णावधयोग्यहो ॥ नवधावेंचिभूतांतेंअशीजागतसेश्रुति ॥ ८८ ॥

तस्मात्सर्वप्रयत्नेनवधदंडंत्यजेन्नृपः
अवरोधाद्बंधनेनताडणेनचकर्षयेत् ॥ ८९ ॥

यासाठींसर्वयत्नानेंवधदंडात्यजीनृप ॥ कैदेनेंशृंखळेनेंवाताडनेंकर्षिजेनृपें ॥ ८९ ॥

लोभान्नकर्षयेद्राजाधनदंडेनवैप्रजां
नासहायास्तुपित्राद्यादंड्यास्युरपराधिनः ॥ ९० ॥

नलोभेंधनदंडातेंप्रजेतेंकारिजेनृपें ॥ अपराधेंनासहाय्येंदंडाकारिपित्रादिकां ॥ ९० ॥

क्षमाशीलस्यवैराज्ञोदंडग्रहणमीदृशं
नापराधंतुक्षमतेप्रचंडोधनहारकः ॥ ९१ ॥

क्षमाशीलनृपालाचेंदंडघेणेंअसेंअसे ॥ अपराधाक्षमीनाजोदंडानेंधनहारक ॥ ९१ ॥

नृपोयदातदालोकःक्षुभ्यतेभिद्यतेपरैः
अतःसुभागदंडोस्यात्क्षमावान्रंजकोनृपः ॥ ९२ ॥

जेव्हांनृपतदालोकक्षोभतोतेंविभेदतो ॥ सुभागदंडीयाहोईक्षमावान्नृपरंजक ॥ ९२ ॥

मद्यपःकितवस्तेनोजारश्चंडश्चहिंसकः
त्यक्तवर्णाश्रमाचारोनास्तिकःशठएवच ॥ ९३ ॥

मद्यपीधूर्तवाचोरजारवाकोपिहिंसक ॥ त्यक्तवर्णाश्रमाचारशठहीतेंविनास्तिक ॥ ९३ ॥

मिथ्याभिशापकःकर्णेजपार्यदेवदूषकौ
असत्यवाक्न्यासहारीतथावृत्तिविघातकः ॥ ९४ ॥

चाहाडामिथ्याजोत्रासीद्वेषीजोगुरुदेवता ॥ ठेवहर्ताखोटसाळतसावृत्तिविनाशक ॥ ९४ ॥

अन्योदयासहिष्णुश्चह्युल्कोचग्रहणेरतः
अकार्यकर्तामंत्राणांकार्याणांभेदकस्तथा ॥ ९५ ॥

अन्योंदयनसोसीजोघेऊंलांचहुशारजो॥ करीअकार्यजोकार्यामस्लतीलाहिभेदक ॥९५॥

अनिष्टवाक्यःरुषवाग्जलारामप्रबाधकः
नक्षत्रसूचीराजद्विट्कुमंत्रीकूटकार्यवित् ॥ ९६ ॥

बोलेअनिष्टकठिणजलाबागेसबाधक ॥ राजद्वेषीजोकुजोशीकुमंत्रीकपटीरत ॥ ९६ ॥

कुवैद्यामंगलाशौचशीलामार्गनिरोधकाः
कुसाक्ष्युद्धतवेषश्चस्वामिद्रोहीव्ययाधिकाः॥९७॥

अमंगलाकुवैद्याहीअशुचीमार्गपीडका ॥ वेषेंउद्धतदुःसाक्षीस्वामिद्रोहीव्ययाधिका। ९७।

अग्नीदोगरदावेश्यासक्तःप्रकुलदंडकृत्
तथापाक्षिकसभ्यश्चबलाल्लिखितग्राहकः ॥ ९८ ॥

अग्नीलावीविषादेईवेश्यासक्ताकुदंडदा ॥ पक्षपातीतसासभ्यबळानेंखतजोकरी ॥ ९८ ॥

अन्यायकारीकलहशीलोयुद्धेपराङ्मुखः
साक्ष्यलोपीपितृमातृसतीस्त्रीमित्रद्रोहकः॥९९ ॥

अन्यायकारीकलहीयुद्धींजोपळतोसदा ॥ साक्षेलोपीआइबापसतिस्त्रीमित्रद्रोहक। ९९।

असूयकःशत्रुसेवीमर्मच्छेदीचवंचकः
स्वकीयद्विट्गुप्तवृत्तिवृषलोग्रामकंटकः ॥ १०० ॥

वृथाईर्षाशत्रुसेवीकाढीमर्माहिवंचक ॥ स्वीयांद्वेषीगुप्तवृत्तीकामुकग्रामकंटक ॥ १०० ॥

विनाकुटुंबभरणात्तपोविद्यार्थिनंसदा
तृणकाष्टादिहरणेशक्तःसन्भैक्ष्यभोजकः ॥ १ ॥

कुटुंबपोषणाविणतपोविद्यार्थजोसदा ॥ तृणकाष्टादिकाआणुशक्तभिक्षेसमागता ॥ १ ।

कन्यायाआपिविक्रेताकुटुंबवृत्तिऱ्हासकः
अधर्मासूचकश्चापिराजानिष्टमुपेक्षकः ॥ २ ॥



कन्याकेताकुटुंबाचावृत्तीचाऱ्हासकारक ॥ सुचवीजाअधर्मातराजा[illegible]क॥ ॥२ ॥

